# TARKAMRITA

## AN ELEMENTARY TREATISE ON THE NYAYA PHILOSOPHY

BY

## JAGADISA BHATTACHARYA

EDITED

BY

PANDIT MAHESA CHANDRA NYAYARATNA

Published

BY

*PANDIT JIBANANDA VIDYASAGARA, B. A.*
*Superintendent, Free Sanskrit College, Calcutta.*



PINRTED AT THE SARASWATI PRESS.

To be had from Pandit Jibananda Vidyasagara, B. A.
Superintendent, Free Sanskrit College, *Calcutta*

## एतानि मुद्रितसंस्कृतपुस्तकानि

१ आशुबोध व्याकरणम् १।०
२ धातुरूपादर्शः २
३ शब्दस्तोम महानिधिः ( संस्कृत अभिधान ) १०
४ सिद्धान्तकौमुदी सरला टीका सहिता ११
५ सिद्धान्तविन्दुसार (वेदान्त) ॥
६ तुलादानादिपद्धतिः(वङ्गाक्षरैः) ४
७ गयाश्राद्धादि पद्धतिः १
८ शब्दार्थरत्न ॥।
९ वाक्यमञ्जरी (वङ्गाक्षरैः) ।
१० छन्दोमञ्जरी तथा वृत्तरत्नाकर सटीक ॥/
११ वेणीसंहार नाटक सटीक १
१२ मुद्राराक्षस नाटक सटीक १॥
१३ रत्नावली सटीक ॥।
१४ मालविकाग्निमित्र सटीक १॥
१५ धनञ्जय विजय सटीक ।
१६ महावीरचरित १॥
१७ साङ्ख्यतत्त्वकौमुदी सटीक २
१८ वैयाकरणभूषणसार ॥।
१९ लीलावती ॥।
२० बीजगणित १
२१ शिशुपालबध सटीक (माघ) ४
२२ किरातार्जुनीय सटीक २॥
२३ कुमारसम्भव पूर्वखण्ड सटीक ॥।
२४ कुमारसम्भव उत्तरखण्ड ॥
२५ अष्टकम् पाणिनीयम् ॥।
२६ वाचस्पत्यम् (संस्कृत वृहदभिधान ) १२०
२७ कादम्बरी सटीक ४
२८ राजप्रशस्ति ।/
२९ अनुमानचिन्तामणि तथा अनुमानदीधिति ४
३० सर्वदर्शनसंग्रह १
३१ भामिनीविलास सटीक १
३२ हितोपदेश सटीक १
३३ भाषापरिच्छेदमुक्तावलीसहित १
३४ बहुविवाहवाद ।
३५ दशकुमारचरित सटीक १॥
३६ परिभाषेन्दुशेखर ॥।
३७ कविकल्पद्रुम धातुपाठः ॥
३८ चक्रदत्त (वैद्यक) २॥
३९ उणादिसूत्र सटीक २
४० मेदिनीकोष १
४१ पञ्चतन्त्रम् ( श्रीविष्णुशर्मणा सङ्कलितम्) २॥
४२ विद्वन्मोदतरङ्गिणी(चम्पूकाव्य)॥
४३ माधवचम्पू ।/
४४ तर्कसंग्रह ( इंराजी अनुवाद सहित) ॥
४५ प्रसन्नराघव नाटक (श्रीजयदेवकवि विरचित) १
४६ विवेकचूडामणि ( श्रीमत् शङ्कराचार्य कृत) ।/
४७ काव्यसंग्रह (सम्पूर्ण) ५
४८ लिङ्गानुशासन सटीक ।
४९ ऋतुसंहार सटीक ।/
५० विक्रमोर्वशी (सटीक) १॥
५१ वसन्ततिलक भाण ।/

५२ गायत्री व्याख्या ॥
५३ सांख्यदर्शन ( भाष्यसहित ) सांख्य प्रवचन भाष्य २
५४ भोजप्रबन्ध ॥।०
५५ नलोदय सटीक ॥≠
५६ ईश केन कठ प्रश्न मुण्ड माण्डूक्य (सटीक भाष्य) ५
५७ छान्दोग्य (उपनिषद्) सभाष्य सटीक ५
५८ तैत्तिरीय ऐतरेय श्वेताश्वतर (उपनिषद्) सभाष्य सटीक २
५९ बृहदारण्यक (उपनिषद्) सटीक सभाष्य १०
६० सुश्रुत वैद्यक ४
६१ शार्ङ्गधर (वैद्यक) १
६२ वेतालपञ्चविंशति ॥।०
६३ पातञ्जलदर्शन (सभाष्यसटीक) ४
६४ आत्मतत्त्वविवेक (बौद्धाधिकार) २
६५ मुक्तिकोपनिषत् ≠
६६ उपमान चिन्तामणि ।०
६७ नागानन्द नाटक १
६८ पूर्णप्रज्ञ दर्शनम् (मध्वस्वामि कृत भाष्य सहितम्) २
६९ चन्द्रशेखरचम्पू काव्य २
७० सामवेदस्य मन्त्र ब्राह्मणम् (भाष्य सहितम्) २
७१ सामवेदस्य आरण्यसंहिता सायणाचार्य्य कृत भाष्यसहिता १
७२ विद्धशालभञ्जिका नाटिका सटीक १
७३ कारण्डव्यूह (बौद्धशास्त्र) २
७४ कुवलयानन्द-अलङ्कारचन्द्रिकाख्य टीका सहित २
७५ प्रियदर्शिका नाटिका सटीक (श्रीहर्षविरचित) ॥
७६ सारस्वत व्याकरण सटीक पूर्वार्द्धम् १।
७७ वासवदत्ता सटीक २
७८ (कालिदास कृत) पुष्पवाणविलास काव्य सटीक ॥
७९ महिम्न शतकम्, पदारविन्द शतकम्, स्तुतिशतकम्, मन्दस्मितशतकम्, कटाक्षशतकम् १
८० मनुसंहिता कुल्लूकभट्ट कृत टीका सहित ५
८१ नैषधचरितम् (मल्लिनाथ कृत टीका सहित) १०
८२ चन्द्रालोक प्राचीन अलङ्कार ॥
८३ वीरमित्रोदय (स्मृतिशास्त्र) १०
८४ भावप्रकाश (वैद्यक) १०
८५ प्रबोधचन्द्रोदय नाटक सटीक २
८६ अनर्घराघवनाटक (मुरारिकृत) २
८७ दैवतब्राह्मणसभाष्य १
८८ षड्विंशब्राह्मणम् १
८९ मीमांसा परिभाषा ।०
९० अर्थसंग्रह (लौगाक्षीमीमांसा) ॥०
९१ रघुवंश सटीक १॥०
९२ मेघदूत सटीक ॥।०
९३ ईश्वरनिरूपणम् १

९४ ईश्वरानुमानचिन्तामणि (गङ्गेशोपाध्याय कृत) १

९५ न्यायदर्शन सभाष्य सवृत्ति २॥०

९६ सटीक वाल्मीकिरामायण बालकाण्डस्य प्रथमावधि सप्तषष्टि सर्गपर्य्यन्तम् २

९७ सटीक वाल्मीकिरामायण बालकाण्डस्य अष्टषष्टि सर्गावधि सप्तसप्तति सर्ग पर्य्यन्तम् १

९८ मदनपालनिघण्टुः (वैद्यक) १

९९ संस्कृतशिक्षामञ्जरी प्रथमभागः ✓

१०० संस्कृतशिक्षामञ्जरीद्वितीयभागः ।

१०१ साहित्यदर्पणम् (अलङ्कार) १॥०

१०२ श्रीहर्षचरित बाणभट्टकृत २

१०३ अमरकोष ॥०

१०४ वेदान्तसूत्र शङ्कराचार्य्य कृत शारीरकभाष्य तथा गोविन्दानन्द कृत टीका सहित १०

१०५ वेदान्तपरिभाषा १

१०६ वेदान्तसार सटीक १

१०७ सटीक निदान (वैद्यक) ४

१०८ कामन्दकी नीतिसार सटीक १

१०९ ( दण्डिकवि कृत ) मल्लिकामारुतप्रकरण सटीक २

११० अत्रि विष्णु, हारीत, याज्ञवल्क्य उशना अङ्गिरा यम आपस्तम्ब, संवर्त्त कात्यायन वृहस्पति पराशर व्यास शङ्ख लिखित दक्ष गौतम शातातप वशिष्ठ प्रणीत संहिता (धर्म्मशास्त्र) १५

१११ मत्स्यपुराण ६

११२ चरकसंहिता(वैद्यक) सम्पूर्ण १०

११३ रसेन्द्रचिन्तामणि तथा रसरत्नाकर (वैद्यक) ६

११४ भगवद्गीता शाङ्करभाष्य आनन्दगिरिकृतटीका तथा सुबोधिनीसमेत ५

११५ शब्दशक्तिप्रकाशिका १

११६ मालतीमाधव सटीक १॥०

११७ सटीक भट्टिकाव्य ४

११८ सटीक काव्यप्रकाश ४

११९ सभाष्यशाण्डिल्यसूत्र ॥✓

१२० लघुकौमुदीव्याकरणम् ॥०

१२१ महानाटकम्(हनुमन्नाटक) १

१२२ दशरूपकम् (अलङ्कार) १॥०

१२३ भोजचम्पू ( भोजदेव कृत चम्पूरामायणम्) १

१२४ भारत चम्पू सटीक ४

१२५ मार्कण्डेयपुराणम् ५

१२६ गोलाध्यायः १

१२७ गणिताध्यायः १

१२८ पञ्चदशी (सटीक) २

१२९ पातञ्जलदर्शनस्य भोजवृत्तिः १

१३० शकुन्तलानाटक टीकासहित १

१३१ शब्दरूपादर्श ॥०

१३२ वृहत्संहिता वा वाराहीसंहिता ४।✓

१३३ तर्कामृत (जगदीशकृत) ।०

१३४ द्वात्रिंशत्पुत्तलिका १

१३५ उत्तररामचरित १।०

कलिकाता संस्कृत विद्यामन्दिरे—बि, ए, उपाधिधारिणः
श्रीजीवानन्द-विद्यासागर-भट्टाचार्य्यस्य प्रकाशात लभ्यानि ।

# तर्कामृतम् ।



ब्रह्माद्या निखिलार्च्चिताखिलदृगसन्दोहाः सदाभीष्टदा
अज्ञानप्रशमाय यत्र मनसो वृत्तिं समस्तां दधुः ।
श्रीविश्वेश्वरणाम्बुजं भवभयध्वंसैकवीजं परं
हृत्पद्मे विनिधाय तन्निरुपमन्तर्कामृतं तन्यते ॥ १ ॥

अथ श्रुतिः श्रूयते,—"आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः"—इति; अस्यार्थः मुमुक्षुणा आत्मा द्रष्टव्यः, मुमुक्षोरात्मदर्शनमिष्टसाधनमिति यावत्। आत्मदर्शनोपायः कः ?—इत्यत्राह,—'श्रोतव्यः' इत्यादि, तेन आर्थक्रमेण शब्दक्रमस्त्यक्तो भवति(१), 'अग्निहोत्रं जुहोति,' 'यवागूं पचति'—इत्यादिवत्; तथा च श्रवणमनननिदिध्यासनानि तत्त्वज्ञानजनकानीत्युक्तं भवति। अत्र श्रुतितः कृतात्मश्रवणस्य मननेऽधिकारः, मननं च आत्मन इतरभिन्नत्वेनानुमानं(२), तच्च भेदप्रतियोगीतरज्ञानसाध्यं(३), तथाचेतरदेव कियत् ?—इत्येतदर्थं पदार्थनिरूपणम् ।

संक्षेपतः पदार्थो द्विविधः(४),—भावोऽभावश्च ; भावः

---

(१) कार्य्यस्य कारणोत्तरभावित्वात् ।

(२) आत्मा इतरेभ्यो भिद्यते आत्मत्ववत्त्वात्, यत् इतरेभ्यो न भिद्यते न तद् आत्मत्ववत् यथा घटादि, न चायं तथा ।

(३) अभावज्ञाने प्रतियोगिज्ञानस्य हेतुत्वादिति भावः ।

(४) अवान्तरविभाजकोपाधिद्वयविशिष्टः ।

षड्विधः,—द्रव्यगुणकर्मसामान्यविशेषसमवायभेदात् । तत्र द्रव्यत्वगुणत्वकर्मत्वानि जातयः(५), समान्यत्वादीनि उपाधयः । द्रव्याणि नव,—पृथिव्यप्तेजोवाय्वाकाशकालदिगात्ममनांसि । आकाशत्वकालत्वदिक्त्वानि उपाधयः(६), अन्यानि जातयः ।

तत्र रूपरसगन्धस्पर्शसंख्यापरिमाणपृथक्त्वसंयोगविभागपरत्वापरत्वगुरुत्वद्रवत्वसंस्काराश्चतुर्दश गुणाः पृथिव्यां । तत्रैव गन्धं विहाय स्नेहं विनियोज्य चतुर्दश गुणाः जलस्य। रूपस्पर्शसंख्यापरिमाणपृथक्त्वसंयोगविभागपरत्वापरत्वद्रवत्वसंस्कारा एकादश गुणाः तेजसः । स्पर्शसंख्यापरिमाणपृथक्त्वसंयोगविभागपरत्वापरत्वसंस्कारा नव गुणाः वायोः । शब्दसंख्यापरिमाणपृथक्त्वसंयोगविभागाः षड् गुणाः आकाशस्य । संख्यापरिमाणपृथक्त्वसंयोगविभागाः पञ्च गुणाः कालदिशोः । संख्यापरिमाणपृथक्त्वसंयोगविभागबुद्धिसुखदुःखेच्छाद्वेषप्रयत्नधर्माधर्मसंस्काराः चतुर्दश गुणा आत्मनः । संख्यापरिमाणपृथक्त्वसंयोगविभागपरत्वापरत्वसंस्कारा अष्टौ गुणाः मनसः। ज्ञानेच्छाकृतिसंख्यादिपञ्चकम्—अष्टौ गुणाः ईश्वरस्य । तथा च,—

'वायोर्नवैकादश तेजसो गुणाः, जलक्षितिप्राणभृतां चतुर्दश।
दिक्कालयोः पञ्च षड़ेव चाम्बरे महेश्वरेऽष्टौ मनसस्तथैव च ॥'

---

(५) द्रव्यत्वं संयोगविभागसमवायिकारणतावच्छेदकतया, गुणत्वं गुणपदशक्यतावच्छेदकतया, कर्मत्वं चलतीत्यनुगतप्रत्ययविषयतया च सिद्धम् ।

(६) उपाधयः अखण्डधर्माः ।

तत्र पृथिवीजलतेजोवायवो द्विविधाः,—परमाणवः सावयवाश्च। आकाशकालात्मदिशो विभुरूपाः। मनः परमाणुरूपं। तत्र सावयवा अनित्याः, इतराणि नित्यानि; सावयवा अपि त्रिविधाः शरीरेन्द्रियविषयभेदात्। मानुषं शरीरं पार्थिवं, जलीयं शरीरं वरुणलोके प्रसिद्धं, तैजसं शरीरमादित्यलोके, वायवीयं शरीरं वायुलोके। घ्राणेन्द्रियं पार्थिवं, रसनेन्द्रियं जलीयं, चक्षुरिन्द्रियं तैजसं, त्वगिन्द्रियं वायवीयं, श्रोत्रेन्द्रियं कर्णशष्कुल्यवच्छिन्न-नभःप्रदेशः,—एतानि पञ्च वहिरिन्द्रियाणि; मनोऽन्त-रिन्द्रियं, तेन षडिन्द्रियाणि। विषयाश्च शब्दादिरूपेण प्रसिद्धाः। आत्मा द्विविधः जीवात्मा परमात्मा च; तत्र जीवात्मानः प्रतिशरीरं भिन्नाः बन्धमोक्षयोग्याः। परमात्मा ईश्वरः।

अथ प्रत्यक्षाप्रत्यक्षद्रव्याणि,—परमाणुद्व्यणुके अप्रत्यक्षे, महदुद्भूतरूपवत्त्वं यत्र, तानि पृथिवीजलतेजांसि प्रत्यक्षाणि, आत्मा च प्रत्यक्षः(७)। वाय्वाकाशकालदिङ्मनांसि तु अप्रत्यक्षाणि। वहिर्द्रव्यप्रत्यक्षं प्रति महत्त्वे सत्युद्भूत-रूपवत्त्वं प्रयोजकम्(८)।

अथ द्रव्योत्पत्तिप्रक्रिया, तत्रोत्पत्तिः कारणवतः;

---

(७) प्रत्यक्षाणि वहिरिन्द्रियजन्यलौकिकप्रत्यक्षविषयाणि। प्रत्यक्षः मानसप्रत्यक्षः, मानसप्रत्यक्षनिरूपितलौकिकविषयताश्रय इत्यर्थः।

(८) महत्त्वं परमाणुद्व्यणुकवारणाय। उद्भूतत्वं घ्राणादि-वारणाय। रूपवत्त्वं वायुवारणाय।

अनन्यथासिद्धनियतपूर्ववर्त्ति कारणं, तत्त्वं कारणत्वम्। त्रिविधानि कारणानि,—समवायिकारणासमवायिकारण-निमित्तकारणानि। यत्समवेतं कार्य्यमुत्पद्यते तत् समवायिकारणं, यथा परमाणुः द्व्यणुकस्य, कपालं घटस्य। समवायिकारणे सम्बद्धं कारणम् असमवायिकारणं, यथा परमाणुद्वयसंयोगो द्व्यणुकस्य; कपालरूपं घटरूपस्य; एतदुभयभिन्नं यत्कारणं तन्निमित्तकारणं, यथा द्व्यणुके ईश्वरः घटे दण्डः। एतत्कारणत्रयं भावकार्य्यमात्रस्य। तत्र समवायिकारणं द्रव्यमेव। असमवायिकारणं द्रव्ये गुणः, गुणे गुणः कर्म्म च(८)। कार्य्यमात्रं प्रति साधारण-कारणानि,—ईश्वरः, तज्ज्ञानेच्छाकृतयः, प्रागभावकाल-दिगदृष्टानि। तत्र परमाणुद्वयसंयोगात् द्व्यणुकमुत्पद्यते, संयुक्तद्व्यणुकत्रयात्त्रसरेणुः। एवं चतुरणुकादि कपालान्तं; कपालद्वयसंयोगेन घटो जायते; घटस्त्वन्त्यावयवी।

अथ द्रव्ये प्रमाणं कथ्यते,—प्रत्यक्षद्रव्ये प्रत्यक्षमेव प्रमाणं, अतीन्द्रियेऽनुमानं। तत्पक्षहेतुसाध्यदृष्टान्तज्ञानसाध्यं। विशेषो वक्ष्यते। परमाणुद्व्यणुकानुमानं यथा, त्रसरेणुः सावयवद्रव्यारब्धः वहिरिन्द्रियवेद्यद्रव्यत्वात्, वहिरिन्द्रिय-वेद्यद्रव्यं यत्, तत्सावयवद्रव्यारब्धं, यथा घटः; अत्र त्रसरेणुः पक्षः, सावयवद्रव्यारब्धत्वं साध्यं, वहिरिन्द्रियवेद्यद्रव्यत्वा-

---

(८) गुणः स्वावयवसंयोगादिः। गुणे कार्य्यस्य गुणे शुक्लरूपादौ गुणः समवायिकारणस्य गुणः शुक्लरूपादिः। कर्म्म क्रिया संयोग-विभागयोरसमवायिकारणमित्यर्थः।

ङ्गिति हेतुः(१०), घटो दृष्टान्तः, अनेन द्व्यणुकं परमाणुश्च सिध्यति ।

आकाशवायू शब्देन स्पर्शेन चानुमीयेते,—शब्दो द्रव्याश्रितो गुणत्वात् यथा घटरूपम्, अनेन द्रव्यान्तरबाधात् शब्दाश्रयत्वेनाकाशं सिध्यति(११)। पृथिव्यादित्रयावृत्तिरयं स्पर्शो द्रव्याश्रितो गुणत्वादित्यनुमानेन द्रव्यान्तरबाधात् स्पर्शाश्रयत्वेन वायुः सिध्यति ।

काले प्रमाणं यथा,—परत्वापरत्वे द्विविधे कालिके दैशिके च, परत्वोत्पत्तिश्च बहुतररविक्रियाविशिष्टशरीरज्ञानात्. अपरत्वोत्पत्तिश्च स्वल्पतररविक्रियाविशिष्टशरीरज्ञानात् ; तत् परत्वं ज्येष्ठत्वम्, अपरत्वं कनिष्ठत्वं ; तदनुमानं यथा,—परत्वजनकं बहुतररविक्रियाविशिष्टशरीरज्ञानमिदं(१२)परम्परासम्बन्धघटकसापेक्षं साक्षात्सम्बन्धाभावे सति विशिष्टज्ञानत्वात्, लोहितः स्फटिक इति प्रत्ययवत् ; परम्परासम्बन्धश्च स्वसमवायिसंयुक्तसंयोगः(१३), तेन सम्बन्धघटकः कालः सिध्यति । ननु कालस्य भूतभविष्यद्वर्त्तमानभेदेन बहुत्वात् कुत एकत्वमिति चेन्न, उपाधिभेदेन भेदप्रत्ययात् कालोपाधयो रविक्रियादिरूपा भिन्ना एव ।

---

(१०) मनोवेद्यात्मनि व्यभिचारवारणाय बहिःपदम् । रूपत्वादौ व्यभिचारवारणाय द्रव्यपदम् ।

(११) अन्यत्वासम्भवेन परिशेषात् सिद्धिः ।

(१२) शरीरविशेष्यकं दिनादिरूपरविक्रियाविशिष्टज्ञानं पक्षः ।

(१३) स्वा रविक्रिया, तत्समवायी रविः, तत्संयुक्तः कालः, तत्संयोगोऽस्मदादौ ।

एवं दैशिकपरत्वापरत्वाभ्यां दिशः सिद्धिः. ते च दूरत्वसमीपत्वे। अवधिसापेक्षबहुतरसंयोगविशिष्टशरीरज्ञानमिदं परत्वजनकं परम्परासम्बन्धघटकसापेक्षमित्यादि पूर्ववत् ;तेन च दिशः सिद्धिः(१४)। न चाकाशमेव सम्बन्धघटकमास्तामिति वाच्यं, तस्य शब्दाश्रयत्वेनैव धर्मिग्राहकप्रमाणसिद्धत्वात् न रविक्रियाद्युपनायकत्वसम्भवः(१५)।

अहं सुखीत्यादिप्रत्यक्षमात्मनि प्रमाणं। ईश्वरे चानुमानं,—यथा क्षितिः कर्त्तृका कार्य्यत्वात् घटवत्(१६)।

---

(१४) अवधिसापेक्षेति, यथा प्रयागात् काशीतो गया परा। गयातः काशी अपरेति। अत्राद्ये अवधिः काशी, तदपेक्षया प्रयागावधिकबहुतरसंयोगवत्त्वं गयायाम्। द्वितीयेऽवधिर्गया तदपेक्षया प्रयागावधिकाल्पतरसंयोगवत्त्वं काश्याम्। न च प्रयागप्रतियोगिकबहुतरसंयोगा गयायां, नवा प्रयागसंयुक्तदेशीयाः, किन्तु प्रयागावधिकाः काश्यपेक्षया बहुतरा ये मध्यवर्त्तिदेशसंयोगास्तद्वत्त्वं, तच्च न साक्षात्, किन्तु तावत्समवायिसंयुक्तत्वरूपपरम्परयेति तावत्समवायिदिक्सिद्धिः। न च प्रयागसमीपवर्तिन्यपि तादृशयावत्संयोगाश्रयदिक्संयोगस्य सत्त्वात् परत्वापत्तिः, प्रयागावधिका ये काश्यपेक्षया बहुतराः संयोगास्तदन्तःपाती तद्देशप्रतियोगिकसंयोगोऽपीति तत्प्रतियोगिकसंयोगस्य तस्मिन् साक्षात् परम्परया चानङ्गीकारात्।

(१५) धर्मिण आकाशस्य ग्राहकं यत् प्रमाणं पूर्वोक्तशब्दपक्षकानुमितिः शब्दाश्रयत्वेन तुल्यवित्तिवेद्यतया तद्विषयत्वादित्यर्थः। तेषां सम्बन्धघटकत्वे हिमवत्यपि विन्ध्यवत्त्वप्रतीत्यापत्तिः, कालदिशोस्तु यत्सम्बन्धघटकत्वेन सिद्धिस्तद्विशिष्टबुद्धिमात्रनियामकत्वेन अनतिप्रसङ्गात्। रविक्रियाद्युपनायकत्वं रविक्रियोपनीतभानविषयत्वम्।

(१६) क्षितिः द्व्यणुकमित्यर्थः, तेन क्षितित्वसामानाधिकरण्येन सकर्त्तृकत्वसाधने सिद्धसाधनं, अवच्छेदकावच्छेदेन तत्साधने बाधः,

तेनेश्वरस्य तद्वृत्तिनित्यज्ञानेच्छाकृतीनां तत्सार्वज्ञस्य च सिद्धिः । मनसि प्रमाणं यथा, सुखादिप्रत्यक्षमिन्द्रियजन्यं जन्यप्रत्यक्षत्वात् घटप्रत्यक्षवत्, तथा चेन्द्रियान्तरवाधे मनसः सिद्धिः ।

अथ द्रव्यनाशप्रक्रिया—द्रव्यनाशो द्विविधः,—क्वचिदसमवायिकारणनाशात्, क्वचित् समवायिकारणनाशाच्च । तत्राद्यो यथा परमाणुद्वयसंयोगनाशाद्‌द्व्यणुकनाशः; द्वितीयो यथा, कपालनाशाद्घटनाशः, घटनाशः उभयतः सम्भवति(१७) ।

आकाशकालदिगात्मपरमाणवोऽवृत्तयः, समवायश्च । पृथिव्यादिपञ्चानां भूतत्वं, पृथिवीजलतेजोवायुमनसां क्रियावत्त्वमूर्त्तत्वे(१८) । पृथिव्यप्तेजोवायवो द्रव्यसमवायिकारणानि । कालस्य कालिकसम्बन्धेन सर्वाधिकरणत्वं । दिशो दैशिकसम्बन्धेन सर्वाधिकरणत्वम् । इति द्रव्यनिरूपणम् ॥

अथ गुणाः कथ्यन्ते,—रूपरसगन्धस्पर्शसंख्यापरिमाणपृथक्त्वसंयोगविभागपरत्वापरत्वबुद्धिसुखदुःखेच्छाद्वेषप्रयत्न-

---

पटादौ कुविन्दादिकर्तृकत्वस्य सिद्धेः, नित्ये परमाण्वादौ च सकर्तृकत्वस्य अभावादिति मत्युक्तम् । प्रागभावप्रतियोगित्वे सति ध्वंसप्रतियोगित्वं कार्यत्वं, तेन ध्वंसे न व्यभिचारः ।

(१७) उभयतः समवायिकारणनाशात् असमवायिकारणनाशाच्च । द्व्यणुकनाशस्तु न तथा, तत्समवायिकारणस्य परमाणोर्नित्यत्वात् ।

(१८) बहिरिन्द्रियग्राह्यविशेषगुणवत्त्वं भूतत्वम् । क्रियासमवायिकारणतावच्छेदकतया सिद्धो जातिविशेषो मूर्त्तत्वम् ।

गुरुत्वद्रवत्वस्नेहसंस्कारधर्म्माधर्म्मशब्दाश्चतुर्विंशतिर्गुणाः। अत्र रूपत्वादीनि सर्वाण्येव जातयः। रूपं पृथिवीजलतेजोवृत्ति, तच्च शुक्लकृष्णरक्तपीतचित्रादिभेदेन* बहुविधं पृथिवीवृत्ति। अभास्वरशुक्लरूपं जलवृत्ति। शुक्लभास्वरं† तेजोवृत्ति। रसः पृथिवीजलवृत्तिः, तत्र मधुरलवणकटुतिक्ताम्लकषायभेदात् षड्विधः रसः पृथिव्यां। जले मधुर एव रसः। गन्धो द्विविधः,—सुरभिरसुरभिश्च, पृथिवीमात्रवृत्तिः। स्पर्शः पृथिव्यादिचतुष्टयवृत्तिः। स च त्रिविधः,—शीतः उष्णश्च अनुष्णाशीतश्च। अनुष्णाशीतस्पर्शो वायुपृथिव्योः,‡ जले शीतः, तेजसि उष्णः।

संख्यापरिमाणपृथक्त्वसंयोगविभागा नव द्रव्यवृत्तयः। परत्वापरत्वे पृथिवीजलतेजोवायुमनोवृत्तिनी। बुद्धिसुखदुःखेच्छाद्वेषप्रयत्नभावनाधर्म्माधर्म्मा आत्मवृत्तयः। गुरुत्वं पृथिवीजलवृत्ति। द्रवत्वं पृथिवीजलतेजोवृत्ति; तद्द्विविधं, नैमित्तिकं सांसिद्धिकं च, आद्यं पृथिवीतेजसोः; द्वितीयं जले। स्नेहो जलमात्रवृत्तिः। संस्कारः पृथिवीजलतेजोवाय्वात्ममनोवृत्तिः। स त्रिविधः,—वेगो, भावना स्थितिस्थापकश्च। तत्र वेगः पृथिव्यादिचतुष्टयमनोवृत्तिः; द्वितीय आत्मवृत्तिः; तृतीयः पृथिव्यादिचतुष्टयवृत्तिः।

---

* शुक्लनीलपीतरक्तहरितकपिशचित्रभेदात् सप्तविधं पृथिव्याम् इति क॰ सं॰ पु॰ पाठः।

† स्वच्छशुक्लम् इति सोसाइटीपुस्तकपाठः।

‡ पृथिवीवाय्वोः इति क॰ सं॰ पु॰ पाठः।

शब्दो द्विविधः,—ध्वन्यात्मको वर्णात्मकश्च, आकाशमात्रवृत्तिः ।

रूपरसगन्धस्पर्शस्नेहसांसिद्धिकद्रवत्वशब्दबुद्धिसुखदुःखेच्छाद्वेषप्रयत्नधर्माधर्मभावना विशेषगुणाः * । संख्यापरिमाणपृथक्त्वसंयोगविभागगुरुत्वनैमित्तिकद्रवत्ववेगस्थितिस्थापकाः सामान्यगुणाः ।

अथ नित्यगुणाः,—जलतेजोवायुपरमाणूनां विशेषगुणाः, परमाणुवृत्तिस्थितिस्थापकश्च, विभूनां परमाणूनां च एकत्वपरिमाणपृथक्त्वानि, ईश्वरेच्छाज्ञानकृतयश्च नित्यगुणाः । अथाप्रत्यक्षगुणाः,—गुरुत्वधर्माधर्मभावनास्थितिस्थापकाः,परमाणुद्व्यणुकवृत्तिगुणाः, अतीन्द्रियवृत्तिसामान्यगुणाः, त्रसरेणोः रूपं विहाय, अन्ये गुणाः अतीन्द्रियाः ।

रूपरसगन्धस्पर्शस्नेहप्रत्यक्षे महद्वृत्तित्वे सति उद्भूतत्वं प्रयोजकम्, सामान्यगुणप्रत्यक्षे तु आश्रयप्रत्यक्षं, बुद्धिप्रत्यक्षे स्ववृत्तिविशिष्टज्ञानत्वं, सुखादिप्रत्यक्षे स्ववृत्तिसुखत्वादिकमेव (१९) । अन्त्याद्यशब्दौ विहाय सर्वः शब्दः प्रत्यक्षः ।

अथ गुणोत्पत्तिप्रक्रिया,—अवयववृत्तिविशेषगुणाः अवयविनि स्वसमानजातीयगुणान् (२०) आरभन्ते । पृथिवीविशेषगुणाः पाकजाः, ते द्विविधाः,—पाकप्रयोज्याः, पाक-

---

* तथाचोक्तम् । रूपं गन्धो रसः स्पर्शः स्नेहः सांसिद्धिको द्रवः ।
बुद्ध्यादिर्भावनान्तश्च शब्दो वैशेषिको गुणः ॥
इति सोसाइटीपुस्तके अतिरिक्तः पाठः ।

---

(१९) प्रयोजकमित्यर्थः ।

(२०) स्ववृत्तिरूपत्वादिव्याप्यजातिमतो गुणान् ।

जन्याश्च, कारणगुणप्रक्रमजन्याः पाकप्रयोज्याः, अग्नि-संयोगजन्याः द्वितीयाः ; "श्यामघटे अग्निसंयोगेन श्याम-रूपनाशानन्तरं घटे रक्तं रूपमुत्पद्यते" इति नैयायिकमतम्। "अग्निसंयोगेन परमाणौ पाके सति परमाणुषु रक्तरूप-मुत्पद्यते पुनर्घटोत्पत्तौ सत्यां कारणगुणप्रक्रमेण घटे रक्तरूपमुत्पद्यते" इति वैशेषिकमतम्। कपालं नीलमे-कम्, एकं च पीतं यदि, तदा घटे चित्ररूपमुत्पद्यते। रसादावेवं सति अवयविनि रसो न जायते, चित्ररसा-द्यस्वीकारात्। गुरुत्वस्थितिस्थापकयोश्च कारणगुणप्रक्रम-जन्यता। द्वित्वादयोऽपेक्षाबुद्धिजन्याः(२१)। परिमाणं चतु-र्विधम्,—अणु महत् ; ह्रस्वं, दीर्घं च। कारणगुणप्रक्रम-जन्यं स्वावयवबहुत्वं -महत्त्वजनकं, यथा त्रसरेणूनाम् ; अवयवानां शिथिलः (२२) संयोगः प्रचयोऽपि तज्जनकः, यथा तूलस्य परिमाणम्।

पृथक्त्वं कारणगुणप्रक्रमजन्यं। ननु तत्र किं प्रमाणं। घटात्पटः पृथगिति प्रत्यक्षं, तस्याऽन्योन्याभावविषयक-त्वमिति चेन्न। अन्योन्याभावप्रत्यये प्रतियोग्यनुयोगिनोः समानविभक्तिकत्वनियमात्, यथा घटो न पट इति। अन्योन्याभावस्य पृथक्त्वरूपत्वे घटात् पटो नेत्यपि प्रयोगा-पत्तेः। न चैवं, घटादन्यः पट इत्यत्र कथमन्योन्याभाव-प्रतीतिरिति वाच्यं, अन्यत्वस्यापि पृथक्त्वरूपत्वात्।

---

(२१) नानैकत्वावगाहिनी बुद्धिरपेक्षाबुद्धिः।

(२२) किञ्चिदवयवानवच्छिन्नत्वं शिथिलत्वं। वस्तुतः शिथिलत्वं जातिविशेषः।

संयोगस्त्रिविधः(२३),—अन्यतरकर्मजः, उभयकर्मजः, संयोगजश्च, आद्यो यथा, मनःकर्मणा आत्ममनसोः संयोगः। द्वितीयो यथा, मेषयोः कर्मणा तयोः संयोगः। तृतीयो यथा, कारणाकारणसंयोगात् कार्य्याकार्य्यसंयोगः, यथा हस्ततरुसंयोगात् कायतरुसंयोगः।

विभागोऽपि त्रिविधः,—अन्यतरकर्मजः, उभयकर्मजः, विभागजश्च। आद्यो यथा, मनःकर्मणा आत्ममनसोर्विभागः। द्वितीयो यथा, मेषयोः कर्मणा तयोर्विभागः। विभागजविभागो द्विविधः कारणमात्रविभागजः, कारणाकारणविभागजश्च। आद्यो यथा, कपालकर्मणा कपालद्वयविभागः, ततः कपालद्वयसंयोगनाशः, ततो घटनाशः ततः कपालस्याकाशादिदेशाद्विभागजो विभागः। न च विभागः स्वोत्पत्त्यनन्तरमेव विभागजविभागं जनयत्विति वाच्यं, द्रव्यनाशसहकृतस्यैव तस्य तज्जनकत्वात्, तत्र द्रव्यस्य प्रतिबन्धकत्वेन,सति द्रव्ये तदसम्भवात्(२४)। न च, कर्मैव एकदा कपालद्वयविभागमाकाशकपालविभागं च जनयत्विति वाच्यं। यद् द्रव्यानारम्भकसंयोगविरोधिनं विभागमारभते, न, तत् द्रव्यारम्भकसंयोगविरोधिनं; अन्यथा विकसत्कमलकुट्मलदलकर्मण्यतिव्याप्तिः(२५)। न च, संयोगि-

(२३) संयोगविभागयोरनपेक्षकारणं कर्मेति सूत्रम्।

(२४) विभागजविभागासम्भवात्।

(२५) विकसत्कमलकुट्मलभङ्ग एव विपक्षबाधकस्तर्कः। इदं च वैशेषिकमतं। नैयायिकनये तु कर्मणो वैलक्षण्येन द्वकर्मणोऽतथात्वेऽपि

ऽप्येवमस्तु, तत्र अविरोधात् । द्वितीयस्तु कारणाकारणवि-भागात् कार्य्याकार्य्यविभागः, यथा, करतरुविभागात् कायतरुविभागः । परत्वापरत्वोत्पत्तिः कालप्रकरणे उक्ता ।

बुद्धिर्ज्ञानं ; तद्‌द्विविधं,—स्मरणमनुभवश्च, स्मरणमपि द्विविधं,—यथार्थमयथार्थञ्च । तद्वति तत्प्रकारकत्वं यथार्थत्वं (२६) ; तदभाववति तत्प्रकारकत्वमयथार्थत्वं । पूर्वानुभवः संस्कारद्वारा स्मरणं जनयति, तत्र पूर्वानुभवस्य यथार्थत्वायथार्थत्वाभ्यां स्मरणमपि उभयरूपं भवति । अनुभवो द्विविधः प्रमा अयथार्थश्च । तत्र प्रमा चतुर्विधा, सा वक्ष्यते । अयथार्थज्ञानं चतुर्विधं,—संशयो विपर्य्ययः स्वप्नोऽनध्यवसायश्चेति । संशयो यथा, समानधर्मवद्धर्मिज्ञानविशेषादर्शनकोटिद्वयस्मरणैरयं स्थाणुर्वा पुरुषो वेति ज्ञानं जन्यते, स एव संशयः । विपर्य्ययस्तु समानधर्मवद्धर्मिज्ञानविशेषादर्शनैककोटिस्मरणैः शुक्ताविदं रजतमिति ज्ञानं जन्यते । तत्र गुरुमते इदमित्यनुभवात्मकं ज्ञानं, रजतमिति स्मरणात्मकं ; तेन ग्रहणस्मरणात्मकं ज्ञानद्वयं, न तु रजतत्वविशिष्टज्ञानमिदम्, अन्यस्यान्यथाभानसामग्र्यभावात् । [illegible] स्वतन्त्री-

कपालकर्मणस्तथात्वे बाधकाभावात्, कारणमात्रविभागजविभागस्वी-कारात् । कपालकर्म द्रव्यानारम्भकसंयोगविरोधिविभागाजनकं द्रव्या-रम्भकसंयोगविरोधिविभागजनकत्वादिति व्यतिरेक्यनुमाने च वैजात्यमु-पाधिरिति रहस्यम् ।

(२६) विशेष्यत्वं सप्तम्यर्थः, तस्य च निरूपितत्वसंसर्गेण तत्प्रकारकत्वेऽन्वयः, तथा च तद्वद्विशेष्यतानिरूपिततन्निष्ठप्रकारतानिरूपकत्वं ज्ञानेऽकाकतिनिष्ठं यथार्थत्वम् ।

पस्थितेष्टभेदाग्रहात् । नैयायिकमते प्रवर्त्तकं* विशिष्टज्ञानं, तेन भ्रमः सिध्यति । स्वप्नस्तु अनुभूतपदार्थस्मरणैरदृष्टेन धातुदोषेण च जन्यते । अनध्यवसायश्च किञ्चिदितिज्ञानं विशेषादर्शनाद्भवति । अत्र, यदि 'अयं निर्वह्निः स्यात्तदा निर्धूमः स्यात्' इति तर्को विपर्ययमध्ये बोध्यः । तत्र नैयायिकमते स्वप्नानध्यवसायौ विपर्ययमध्ये प्रविष्टौ । तेन तन्मते अयथार्थज्ञानं द्विविधं,—संशयो विपर्ययश्चेति ।

सुखं धर्मजन्यं । दुःखमधर्मजन्यम् । इच्छा इष्टसाधनताज्ञानजन्या । द्वेषोऽनिष्टसाधनत्वज्ञानजन्यः । कृतिस्त्रिविधा,—जीवनयोनियत्नरूपा, प्रवृत्तिः, निवृत्तिश्च । आद्या जीवनादृष्टजन्या । द्वितीया इच्छाजन्या । तृतीया द्वेषजन्या । धर्मः श्रुतिविहितकर्मजन्यः । अधर्मः श्रुतिविरुद्धाचरणजन्यः । वेगाख्यः संस्कारः आद्यक्रियाजन्यः द्वितीयादिक्रियाजनकः, यथा वेगेन वाणश्चलतीति । भावनाख्यः संस्कारो विशिष्टज्ञानजन्यः । स्थितिस्थापकाख्यः संस्कारः कारणगुणप्रक्रमजन्यः । गुरुत्वं कारणगुणप्रक्रमजन्यं । नैमित्तिकं द्रवत्वं जतुघृतद्रुतसुवर्णादीनामग्निसंयोगजन्यं । स्नेहः कारणगुणप्रक्रमजन्यः । शब्दस्त्रिविधः,—संयोगजः, विभागजः, शब्दजश्च ; आद्यो भेरीदण्डसंयोगजन्यः, द्वितीयो वंशादिदलद्वयविभागजन्यः, तृतीयस्तु संयोगेन विभागेन च आद्ये शब्दे जनिते तेन शब्देन निमित्तवायुसहकृतेन वीचितरङ्गन्यायेन कदम्बगोलकन्यायेन वा जन्यते इति गुणनिरूपणम् ॥

उत्क्षेपणावक्षेपणाकुञ्चनप्रसारणगमनानि पञ्च कर्म्माणि। उत्क्षेपणत्वादीनि जातयः। पृथिवी-जल-तेजो-वायु-मनो-वृत्तीनि कर्म्माणि, सर्वाणि अनित्यानि; अतीन्द्रियवृत्तीनि अतीन्द्रियाणि, प्रत्यक्षवृत्तीनि प्रत्यक्षाणि। अथ कर्म्म-प्रक्रिया,—संयोगेन नोदनाख्येनाद्यं कर्म्म जन्यते, द्वितीयादि वेगजन्यं। क्रियातो विभागः, विभागात् पूर्वसंयोग-नाशः, ततः उत्तरदेशसंयोगोत्पत्तिः, ततः कर्मविभागयो-र्नाशः इति कर्म्मनिरूपणम् ॥

सामान्यं त्रिविधं, व्यापकं, व्याप्यं, व्याप्यव्यापकञ्च व्यापकं सत्ता, व्याप्यं घटत्वादि, द्रव्यत्वादि व्याप्यव्यापकम्।

"व्यक्तेरभेदस्तुल्यत्वं सङ्करोऽथानवस्थितिः।
रूपहानिरसम्बन्धो जातिबाधकसंग्रहः ॥"

नित्यत्वे सत्यनेकसमवेतत्वमिति सामान्यलक्षणं। सामान्यानि नित्यान्येव, अतीन्द्रियवृत्तीनि अतीन्द्रियाणि, प्रत्यक्षवृत्तीनि प्रत्यक्षाणि ॥

नित्यद्रव्यवृत्तयोऽन्त्याः विशेषाः। ते च बहवो नित्या अतीन्द्रियाश्च। प्रलये परमाणूनां भेदाय ते स्वीक्रियन्ते, तेषां वैधर्म्यं व्याप्यत्वादिति।

स्वसम्बन्धिभिन्नो नित्यः सम्बन्धः समवायः, तेन स्वरूप-सम्बन्धस्य संयोगस्य च निरासः। 'इह घटे घटत्वम्' इति प्रतीतिस्तत्र प्रमाणं। नैयायिकमते समवायः प्रत्यक्षः, स च एको नित्यश्च।

ननु अन्यान्यपि अन्धकारसुवर्णादीनि द्रव्याणि सन्ति, आलस्यादयो गुणा अपि सन्ति, कथं, नवैवेत्यादि। मैवम्,

अन्धकारो न द्रव्यं किन्तु तेजोऽभावः। सुवर्णं तेज एव। आलस्यं कृत्यभाव एव। एवमन्यदपि बोध्यम्।

अभावो द्विविधः,—संसर्गाभावोऽन्योन्याभावश्च। आद्यस्त्रिविधः,—प्रागभावः, ध्वंसः, अत्यन्ताभावश्च। प्रागभावो विनाशी अजन्यः। ध्वंसो जन्यो अविनाशी च। अत्यन्ताभावान्योन्याभावौ त्वजन्यौ अविनाशिनौ। योग्यानुपलब्ध्या अभावः प्रत्यक्षः; अन्यत्र तु अतीन्द्रियः।

अथ प्रमा कथ्यते, सा चतुर्विधा, प्रत्यक्षानुमित्युपमितिशाब्दभेदात्; तत्करणानि प्रमाणानि चत्वारि,—प्रत्यक्षानुमानोपमानशब्दभेदात्। तत्र प्रत्यक्षं द्विविधं,—निर्विकल्पकं, सविकल्पकं च। प्रत्यक्षकरणानि षडिन्द्रियाणि,—घ्राण-रसन-चक्षुस्त्वक्-श्रोत्र-मनांसि। एतानि सन्निकर्षसहितानि प्रत्यक्षं जनयन्ति। सन्निकर्षश्च लौकिकोऽलौकिकश्च, अलौकिकस्त्रिविधः,—ज्ञानलक्षणा, सामान्यलक्षणा, योगजश्च। लौकिकः षड्विधः,—संयोगः, संयुक्तसमवायः, संयुक्तसमवेतसमवायः, समवायः, समवेतसमवायः, विशेषणता चेति। संयोगेन द्रव्यग्रहः, संयुक्तसमवायेन शब्दान्यगुण-कर्म-द्रव्यवृत्तिजातीनां प्रत्यक्षं, संयुक्तसमवेतसमवायेन शब्दमात्रवृत्तिजातीतर-गुणवृत्तिकर्मवृत्तिजातीनां प्रत्यक्षं, समवायेन शब्दस्य, समवेतसमवायेन शब्दवृत्तिजातीनां, विशेषणतया अभावस्य, समवायस्य च प्रत्यक्षम्।

अलौकिकः स यथा, ज्ञानलक्षणया 'सुरभि चन्दनम्' इति चाक्षुषं ज्ञानं, सामान्यलक्षणया घटत्वेन रूपेण यावद्घटज्ञानं, योगजधर्मेण योगिनां सर्वज्ञानम्। तत्र निर्विकल्पकं

विशेष्यप्रकारादिरहितं वस्तुस्वरूप-मात्रज्ञानं, सविकल्पकं सप्रकारकं। भासमानवैशिष्ट्यप्रतियोगित्वम् प्रकारत्वं, यथा 'अयं घटः'—इत्यत्र अयं विशेष्यः, घटत्वं प्रकारः, भासमानवैशिष्ट्यं तयोः समवायः, तस्य प्रतियोगि घटत्वं। सविकल्पकमेव विशिष्टवैशिष्ट्यज्ञानं ; यथा 'अयं दण्डी'— इत्यत्र दण्डत्वविशिष्टस्य वैशिष्ट्यं पुरुषे भासते। अथ प्रक्रिया, आदौ इन्द्रियसन्निकर्षात् 'घटघटत्वे' इति निर्विकल्पकं, ततः 'अयं घटः' इति विशिष्टज्ञानम्।

तत्र 'परतः प्रामाण्यग्रहः' इति नैयायिकाः, यथा आदौ 'घटः' इति व्यवसायः, ततः 'घटमहं जानामि' इत्यनुव्यवसायः, ततः 'प्रामाण्याप्रामाण्ये' इति कोटिद्वयस्मरणम् ; अथ चतुर्थे 'इदं ज्ञानं प्रमा न वा'—इति प्रामाण्यसंशयः, ततो विशेषदर्शनानन्तरं प्रामाण्यग्रहः,—इदं ज्ञानं प्रमा समर्थप्रवृत्तिजनकत्वात् ज्ञानान्तरवत्। स्वतः-प्रामाण्यग्रहः- इति त्रयो मीमांसकाः, तत्र गुरुमते 'अयं घटः' इति ज्ञानं, विषयं, आत्मानं, ज्ञानप्रामाण्यं च गृह्णाति। मुरारिमिश्रमते 'अयं घटः' इति ज्ञानानन्तरं घटमहं जानामीत्यनुव्यवसायः, तेनैव प्रामाण्यग्रहः। भट्टमते ज्ञानस्यातीन्द्रियत्वेन ज्ञानमनुमेयं यथा, तथा तद्वृत्ति प्रामाण्यञ्च तथाहि 'अयं घटः' इति ज्ञानानन्तरं घटे ज्ञातता उत्पद्यते, ततो 'ज्ञातो मया घटः' इति ज्ञातताप्रत्यक्षं, ततो व्याप्यादिप्रत्यक्षानन्तरं ज्ञानानुमानं, यथा, अहं घटत्वप्रकारकज्ञानवान् घटत्वप्रकारकज्ञाततावत्त्वात्, तावतैव तस्य धर्मधर्मिविषयकत्वेन प्रामाण्यानुमानम् इति प्रत्यक्षनिरूपणम्॥

अनुमितिकरणमनुमानं, अनुमितित्वं जातिः, व्यापारवत् कारणं करणं, व्यापारश्च तज्जन्यत्वे सति तज्जन्यजनकः। हेतुज्ञानादि करणं, परामर्शो व्यापारः। परामर्शश्च व्याप्तिविशिष्टपक्षधर्मताज्ञानं, यथा 'वह्निव्याप्यधूमवानयम्' इति। आदौ महानसादौ धूमे वह्निसामानाधिकरण्यग्रहे सति 'धूमो वह्निव्याप्यः' इत्यनुभवो जायते, ततः कालान्तरे, पर्वते धूमे दृष्टे सति व्याप्तिस्मरणं, ततश्च व्याप्तिविशिष्टवैशिष्ट्यज्ञानं 'वह्निव्याप्यधूमवानयम्' इति तृतीयलिङ्गपरामर्शः। पक्षतासहितेन तेन 'पर्वतो वह्निमान्' इत्यनुमितिर्जन्यते।

व्याप्तिश्च हेतुसमानाधिकरणात्यन्ताभावाप्रतियोगिसाध्यसामानाधिकरण्यम्। नच, 'अयं संयोगवान् द्रव्यत्वात्' इत्यत्र अव्याप्तिः, प्रतियोगिव्यधिकरणहेतुसमानाधिकरणात्यन्ताभावाप्रतियोगिसाध्यसामानाधिकरण्यमित्यर्थात् *। पक्षता च सिषाधयिषाविरहसहकृतसिद्ध्यभावः।

अनुमानं द्विविधं,—स्वार्थं परार्थं च, तत्र परार्थं पञ्चावयवसाध्यं, अवयवाश्च प्रतिज्ञा-हेतूदाहरणोपनय-निगमनानि ; यथा, अयं वह्निमान् (१), धूमात् (२), यो-यो धूमवान् स वह्निमान् यथा महानसम् (३), वह्निव्याप्यधूमवान् अयम् (४), तस्माद् वह्निमान् (५), इति। स्वार्थं च स्वीयव्याप्त्यादिज्ञानसाध्यं, न तत्र परप्रतिपत्त्यर्थमेवम् आह शब्दप्रयोगम्।

तच्चानुमानं त्रिविधं, केवलान्वयि-केवलव्यतिरेक्यन्वय-

* 'नच'-इत्यादिः 'इत्यर्थात्'-इत्यन्तः पाठः क॰ ख॰ पुस्तके नास्ति।

व्यतिरेकिभेदात्, यत्र साध्यव्यतिरेको न कुत्राप्यस्ति स केवलान्वयी, यथा, 'घटोऽभिधेयः प्रमेयत्वात्' इत्यत्र अभिधेयत्वस्य साध्यस्य व्यतिरेको न कुत्राप्यस्ति*। यत्र साध्यप्रसिद्धिः पक्षातिरिक्ते नास्ति, स केवलव्यतिरेकी, यथा, 'पृथिवी इतरेभ्यो भिद्यते पृथिवीत्वात्,' यत्र इतरभेदाभावः तत्र पृथिवीत्वाभावः यथा जलादौ। व्यतिरेकव्याप्तौ तु साध्याभावो व्याप्यः हेत्वभावो व्यापकः। यत्र साध्यं साध्याभावश्चान्यत्र प्रसिद्धः, सोऽन्वयव्यतिरेकी, यथा 'पर्वतो वह्निमान् धूमात्' इति। अन्वयव्यतिरेकिणि हेतौ अवश्यं पञ्चरूपोपपन्नता अपेक्षणीया, पक्षवृत्तित्वं, सपक्षसत्त्वं, विपक्षव्यावृत्तत्वं, अबाधितत्वं, असत्प्रतिपक्षितत्वञ्चेति पञ्च रूपाणि। केवलान्वयिनि विपक्षव्यावृत्तत्वरहितं, केवलव्यतिरेकिणि सपक्षसत्त्वरहितं चतूरूपमेवापेक्षितं। यत्र साध्यसन्देहः स पक्षः; यत्र साध्यनिश्चयः स सपक्षः; यत्र साध्याभावनिश्चयः स विपक्षः; साध्याभाववान् पक्षो बाधः; साध्यविरोधिसाधको हेतुः सत्प्रतिपक्षः।

सोपाधो पक्षसपक्षसत्त्वाद्यन्यतमभङ्ग आवश्यकः; सोपाधिश्च स्वव्यभिचारितासम्बन्धेन उपाधिविशिष्टः। उपाधिश्च त्रिविधः,—साधनाव्यापकत्वे सति शुद्धसाध्यव्यापकः (१), साधनाव्यापकत्वे सति पक्षधर्मावच्छिन्नसाध्यव्यापकः (२), साधनाव्यापकत्वे सति साधनावच्छिन्नसाध्यव्यापकश्च, आद्यो यथा, 'अयोगोलकं धूमवद्वह्नेः', अत्र आर्द्रेन्धनप्रभववह्नि-

* व्यतिरेकाप्रसिद्धेः इति व्या० बो० पु० पाठः।

मत्त्वमुपाधिः साधनाव्यापकत्वे सति शुद्धसाध्यव्यापकः। द्वितीयो यथा, 'वायुः प्रत्यक्षः प्रत्यक्षस्पर्शाश्रयत्वात्,' अत्र वहिर्द्रव्यत्वावच्छिन्नस्य प्रत्यक्षत्वस्य साध्यस्य व्यापकम् उद्भूतरूपवत्त्वमुपाधिः। तृतीयो यथा 'ध्वंसो विनाशी जन्यत्वात्', अत्र जन्यत्वावच्छिन्नविनाशित्वव्यापकं भावत्वमुपाधिः।

अथ हेत्वाभासाः कथ्यन्ते, सव्यभिचार-विरुद्ध-सत्प्रतिपक्षासिद्ध-बाधिताः पञ्च हेत्वाभासाः। सव्यभिचारस्त्रिविधः,—साधारणासाधारणानुपसंहारिभेदात्; साध्याभाववद्वृत्तित्वं साधारणत्वं, यथा 'धूमवान्वह्नेः'। सकलसपक्षव्यावृत्तत्वम् असाधारणत्वं* यथा 'पर्वतो वह्निमान् पर्वतत्वात्'। सर्वपक्षकत्वम् अनुपसंहारित्वं, यथा 'सर्वं प्रमेयं अभिधेयत्वात्'। साध्याभावव्याप्तो हेतुर्विरुद्धः, यथा 'घटो नित्यः सावयवत्वात्। सत्प्रतिपक्षो यथा 'पर्वतो वह्निमान् धूमात्,' 'पर्वतो वह्न्यभाववान् महानसान्यत्वात्'। असिद्धस्त्रिविधः,-आश्रयासिद्धः, स्वरूपासिद्धः, व्याप्यत्वासिद्धश्च। यत्र पक्षोऽसन् सिद्धसाधनं वा, स आश्रयासिद्धः, यथा 'शशविषाणं नित्यं अजन्यत्वात्' 'शरीरं हस्तादिवत् हस्तादिमत्तया प्रतीयमानत्वात्'। यत्र पक्षावृत्तिर्हेतुः स स्वरूपासिद्धः, यथा 'पर्वतो वह्निमान् महानसत्वात्। स च विशेषणासिद्ध-विशेष्यासिद्ध-भागासिद्ध-भेदाद्बहुविधः; आद्यो यथा 'शब्दोऽनित्यः चाक्षुषत्वे सति जन्यत्वात्'। द्वितीयो यथा 'शब्दोऽनित्यः गुणत्वे सति पर-

---

* सकलसपक्षविपक्षव्यावृत्तत्वमिति का० सो० पु० पाठः।

माणुवृत्तित्वात्'। तृतीयो यथा 'एतानि द्रव्याणि निरवयव-त्वात्'। सोपाधिर्व्याप्यत्वासिद्धः यथा, धूमवान् वह्नेः। बाधो यथा, 'जलह्रदो वह्निमान् द्रव्यत्वात्'। तेन एतद्दोषरहितो हेतुः सद्धेतुः। इत्यनुमानं व्याख्यातम्॥

उपमितिकरणमुपमानं। कीदृशो गवयः?—इति प्रश्ने 'गोसदृशो गवयः' इत्युत्तरिते यदा गोसदृशम् प्राणिनं पश्यति तदा पूर्वोक्तं वाक्यार्थं स्मरति, अनन्तरम् 'अयं गवयपद-वाच्यः' इति शक्तिग्रहः,—सेयमुपमितिः इत्युपमानं व्याख्यातम्॥

आप्तोक्तः शब्दः प्रमाणं, प्रकृतवाक्यार्थगोचरयथार्थ-ज्ञानवान् आप्तः। पदज्ञानं करणं, पदार्थोपस्थितिर्व्यापारः। आकाङ्क्षा-योग्यतासत्ति-तात्पर्य्यज्ञानानि सहकारीणि, फलं शाब्दबोधः। स्वरूपयोग्यत्वे सति अजनितान्वयबोधकत्व-माकाङ्क्षा, तेन 'घटः, कर्मत्वं, आनयनं, कृतिः' इत्यत्र नान्वय-बोधः स्वरूपायोग्यत्वात्। 'अयमेति पुत्रो राज्ञः, पुरुषो-ऽपसार्यताम्' इत्यत्र 'राज्ञः पुरुषः' इति नान्वयबोधः, पुत्रेण जनितान्वयबोधकत्वात्। बाधकप्रमाविरहो योग्यता, तेन 'वह्निना सिञ्चति' इत्यत्र नान्वयबोधः, अयोग्यत्वात्। अव्यवधानेनान्वयप्रतियोग्युपस्थितिरासत्तिः, तेन 'गिरिर्भुक्तं वह्निमान् देवदत्तेन' इत्यत्र नान्वयबोधः। तत्तदर्थप्रतीती-च्छयोच्चरितत्वं तात्पर्यं, तेन भोजनप्रकरणादौ 'सैन्धव-मानय' इत्युक्ते अश्वान्वयबोधो न भवति।

वृत्त्या विना, शब्देन नान्वयबोधो जन्यते, वृत्तिर्द्विविधा. शक्तिर्लक्षणा च, शक्तिः घटादिपदस्य घटादौ। लक्षणा

यथा, 'गङ्गायां घोषः प्रतिवसति' इत्यत्र गङ्गापदार्थे प्रवाहे घोषान्वयानुपपत्त्या गङ्गापदस्य तीरे लक्षणा कल्प्यते, तया वृत्त्या उपस्थिते तीरे घोषः प्रतिवसतीत्यन्वयबोधो भवति। गौणी वृत्तिरपि लक्षणैव. यथा 'अग्निर्माणवकः,' 'गौर्वाहीकः,' अत्र लक्षणया अग्न्यादिसादृश्यं प्रतीयते।

शक्तं पदं चतुर्विधं,—यौगिकं, रूढं, योगरूढं, यौगिकरूढं च, आद्यं यथा पाचकादिपदं, योगार्थे पाककर्त्तरि शक्तम्। द्वितीयं यथा, विप्रादिपदं रूढ्या ब्राह्मणवाचकम्। तृतीयं यथा, पङ्कजादिपदं योगरूढ्या पङ्कजनिकर्त्तृत्वेन पद्मत्वेन च पद्मवाचकम्। चतुर्थं यथा, उद्भिदादिपदं यौगिकं तरुगुल्मादेः, रूढं यागविशेषस्य वाचकम्।

लक्षणा द्विविधा, जहत्स्वार्थाऽजहत्स्वार्था च; आद्या यथा, 'गङ्गायां घोषः' इत्यादौ। द्वितीया यथा, 'छत्रिणो यान्ति' इत्यादौ, अत्र, छत्रिणः तदितरस्यापि गमनान्वयः।

अथ शाब्दबोधप्रक्रिया,—'देवदत्तो ग्रामं गच्छति' इत्यत्र ग्रामकर्मक-गमनजनक-वर्त्तमानकृतिमानित्यन्वयबोधः। द्वितीयाया अर्थः कर्मत्वं, धातोर्गमनं, जनकत्वं संसर्गमर्य्यादालभ्यं, लटो वर्त्तमानत्वं, आख्यातस्य कृतिः, तत्सम्बन्धः संसर्गमर्यादालभ्यः। यत्र कर्त्तरि कृतेर्बाधः तत्र आख्यातस्य व्यापारादौ लक्षणा, यथा 'रथो गच्छति' इत्यत्र गमनजनकवर्त्तमानव्यापारवान् रथः। 'दधि पश्यति' इत्यादौ द्वितीयालोपस्थले दधिशब्द एवाजहत्स्वार्थलक्षणया दधिकर्मत्वं बोधयति। एकवचनाद्युपस्थितमेकत्वादि सर्वत्र

प्रथमादिपदमुपस्थापयति*। 'देवदत्तेन गम्यते ग्रामः' इत्यस्य देवदत्तवृत्तिकृतिजन्य गमनजन्य-फलशाली ग्राम इत्यर्थः। वृत्तित्वं संसर्गबललभ्यं, तृतीयार्थश्च कृतिः, जन्यत्वं संसर्गः, गमनं धात्वर्थः, जन्यत्वं संसर्गः, फलं कर्मात्मनेपदार्थः, शालित्वं संसर्गः। भावप्रत्यये तु 'देवदत्तेन सुप्यते' इत्यस्य देवदत्तवृत्तिकृतिजन्यः स्वाप इत्यर्थः। भावप्रत्ययस्थले फलाभावात् आत्मनेपदार्थो न भासते। भविष्यत्वं लृटोऽर्थः, तच्च विद्यमान-प्रागभाव-प्रतियोग्युत्पत्तिकत्वं, तेन 'गमिष्यति'-इत्यत्र विद्यमानप्रागभावप्रतियोग्युत्पत्तिकगमनानुकूल-कृतिमानित्यर्थः। लुटोऽर्थः अनद्यतनत्वमपि। लुङोऽर्थः उत्पत्तिर्भूतत्वं च ; भूतत्वमतीतत्वं, तच्चोत्पत्तौ अन्वेति, तथा च विद्यमानध्वंसप्रतियोग्युत्पत्तिकत्वं लब्धं, लिटोऽनद्यतनत्वं, परोक्षत्वम्, अतीतत्वं चार्थः, तदन्वयः पूर्ववदुत्पत्तौ। लङोऽनद्यतनत्वमतीतत्वं चार्थः। विधिलिङोऽर्थः कृति-साध्यत्वे सति बलवदनिष्टाजनकेष्टसाधनत्वं; 'स्वर्गकामो यजेत'इत्यादौ कृतिसाध्य-बलवदनिष्टाजनकेष्टसाधनयाग-कर्त्ता स्वर्गकाम इत्यर्थः। आशीर्लिङ्लोटोरर्थः वक्तृच्छा-विषयत्वं ; तेन 'घटमानय' इत्यत्र घटकर्मक-मदिच्छा-विषयानयनानुकूलकृतिमान् त्वमित्यन्वयबोधः। व्याप्य-क्रियया व्यापकक्रियाया आपादनं लृङोऽर्थः ; तात्पर्य्यवशात् क्वचित् भूतत्वं, क्वचिद्भविष्यत्वं च लृङा बोध्यते।

* तेन 'दधि पश्यति' इत्यादौ कर्तृपदाभावेऽपि एकवचनेन तिङा कर्तृपदमुपस्थाप्यते इति भावः। प्रथमादिपदं प्रथमान्तपदमित्यर्थः।

सनः कर्तुरिच्छा अर्थः, सन्नुत्तराख्यातस्याश्रयत्वे लक्षणा, सविषयकार्थकप्रकृतिकाख्यातस्य आश्रयत्वे लक्षणाया 'घटं जानाति' इत्यादौ क्लृप्तत्वात्। यङोऽर्थः पौनःपुन्यं, तच्च तदानीन्तनप्रकृत्यर्थसजातीयक्रियान्तरध्वंसकालीनत्वे सति वर्त्तमानादिकृतिविषयत्वं, 'पापच्यते'— इत्यादौ तादृशकालीनत्वमेव यङा प्रत्याय्यते, आख्यातस्य चरमदलवाचकत्वात् न विशिष्टवाचकत्वं यङः, तदानीन्तनत्वं च स्थूलकालमादाय।

पूर्वकालीनत्वं कर्त्ता च क्त्वार्थः, पूर्वत्वं च सन्निहितक्रियापेक्षया बोध्यं; तत्पूर्वकालीनत्वं तत्प्रागभावकालवृत्तित्वं, तदुत्पत्तिकालीनध्वंसप्रतियोगिकालवृत्तित्वं वा, तेन 'भुक्त्वा व्रजति' इत्यत्र गमनप्रागभावावच्छिन्नकालवृत्तिभोजनकर्त्रभिन्नो व्रजतीत्यर्थः। समानविभक्तिकताम् अभेदेन धर्मिवाचकत्वात्, अव्ययत्वेन क्त्वापरविभक्तिलोपात्। कालः तात्पर्यवशात् व्यवहिताव्यवहितसाधारणो बोद्धव्यः, तेन 'पूर्वस्मिन् अब्दे गत्वाऽस्मिन्नब्दे समागतः' इत्येतादृशप्रयोगसङ्गतिः। इच्छावान् तुमुनोऽर्थः ; 'भोक्तुं व्रजति' इत्यस्य भोजनेच्छावान् व्रजतीत्यर्थः। 'भोक्तुमिच्छति' इत्यत्र तु कर्त्तरि लक्षणा, भोजनकर्त्तारमात्मानमिच्छतीत्यर्थः। 'सविशेषणे हि' इतिन्यायात् विशेषणे कृताविच्छान्वयः।

प्रकृतधात्वर्थकर्त्ता शतृशानचोः, धात्वर्थजन्यफलवान् कर्मशानचोऽर्थः। शत्रादीनां कर्त्ता वाच्यः, सविषयार्थकप्रकृतिकानाम् आश्रयत्वे लक्षणा। एवं कर्तृकर्मकृतां तेन तेन रूपेण कर्त्ता कर्म च वाच्यं। भावकृतान्तु नञ्-

घञादीनां प्रयोगसाधुत्वमात्रं, धात्वर्थातिरिक्तस्य भावक्तता अनुपस्थापनादिति ।

ननु 'नीलं घटमानय' इत्यादौ द्वितीयाद्वयश्रवणात्कर्मद्वयबोधापत्तिः, न तु विशिष्टस्य कर्मत्वमिति चेत् । न, अत्र विशेषणविभक्तिः साधुत्वाय, अथवा विशेषणविभक्तेरभेदोऽर्थः । अत्रायं विशेषः,—द्वितीयपक्षे वाक्यसमासयोः पर्यायता न घटते, वाक्ये 'नीलं घटम्' इत्यादौ अभेदस्य पदार्थत्वेन प्रकारत्वात् न संसर्गत्वं, 'नीलघटम्' इत्यादौ कर्मधारये लक्षणाया अस्वीकारेणाभेदस्यापदार्थत्वेन संसर्गत्वात्; तथा च वाक्यसमासयोः पर्यायानुरोधेन षष्ठीसमासे 'राजपुरुषः' इत्यादौ षष्ठ्यर्थसम्बन्धे लक्षणा न घटते, सम्बन्धस्य संसर्गमर्यादालभ्यत्वात् । वस्तुतस्तु विरुद्धविभक्त्यनवरुद्धस्य अभेदबोधकत्वव्युत्पत्तेः मुख्यार्थराजाभेदस्य बाधेन राजपदस्य राजसम्बन्धिनि लक्षणा । एवं बहुव्रीहौ चरमपदस्यान्यपदार्थे लक्षणा; तथा च द्वन्द्वकर्मधारयान्यसमासे सर्वत्र तत्तदर्थे लक्षणा ।

एवं नञर्थोऽभावः, 'अघटं भूतलम्' इत्यादौ घटभिन्ने लक्षणा । 'न कलञ्जं भक्षयेत्' इत्यादौ बलवदनिष्टजनके लक्षणा । क्रियासङ्गतस्य एवकारस्यात्यन्तायोगव्यवच्छेदोऽर्थः, यथा 'नीलं सरोजं भवत्येव' । विशेषणसङ्गतस्य अयोगव्यवच्छेदः, यथा 'शङ्खः पाण्डुर एव' इति । विशेष्यसङ्गतस्य अन्ययोगव्यवच्छेदः, यथा, 'पार्थ एव धनुर्द्धरः' इत्यादौ । एवं दिशा सर्वत्र बोध्यम् ।

इति श्रीजगदीशभट्टाचार्य्यविरचितं तर्कामृतं समाप्तम् ।

# साङ्ख्यतत्त्वकौमुदी

ईश्वरकृष्णकृतकारिकाव्याख्या

षड्दर्शनटीकाकृद्वाचस्पतिमिश्रविरचिता

गवर्णमेण्ट संस्कृत पाठशालास्थाध्यापक

श्रीतारानाथ तर्कवाचस्पति भट्टाचार्य्य कृतया वृत्त्या समुद्भासिता

तेनैव संस्कृता

---

# SANKHYATATWA KOUMUDI.

BY

**BACHASPATI MISRA**

Edited with a Commentary

BY

PUNDIT TARANATHA TARKAVACHASPATI,

*Professor of Grammar, Government Sanscrit College.*

---

*CALCUTTA:*

PRINTED BY LALCHAND BISWAS,

SUCHARU PRESS.

1871.

# विज्ञापनम्।

---

इह खलु लोके निखिलोऽपि लोकनिवहो धर्म्मादिषु स्वधर्म्मेषु मध्ये सुखमेवानुकूलतया जानन् तत्सम्पादनाय प्रवर्त्तमानः दुःखमेव प्रतिकूलतया जानन् तत्परिहाराय यतमानश्च समुपलभ्यते। तत्रापि सर्व्वेषां सांसारिकसुखानां दुःखसम्भिन्नतया परिणामे दुःखदायकतया च समीक्ष्यकारिणो दुःखसंभिन्नं सुखं विहाय दुःखपरिहारायैव प्रायशः प्रवर्त्तन्ते। "दुःखञ्चात्मधर्म्मः" इति नैयायिक-वैशेषिकाः, बुद्धिधर्म्म इति साङ्ख्य-पातञ्जल-वेदान्तिनः प्रतिपद्यन्ते। दुःखादेर्बुद्धिधर्म्मत्वेऽपि दुःखाकारेण परिणतबुद्धेः प्रतिबिम्बनात् चिदात्मनि पुरुषे प्रतिबिम्बितदुःखसम्बन्धोऽस्त्येव

"तस्मिंश्चिद्दर्पणे स्फारे समस्ता वस्तुदृष्टयः।
इमास्ताः प्रतिबिम्बन्ति सरसीव तटद्रुमाः"॥

इति शास्त्रात्। स्वगततादृशप्रतिबिम्बितदुःखनिवृत्तेः पुरुषेणेष्टत्वात् पुरुषार्थत्वम्। सर्व्वासाञ्च दुःखव्यक्तीनां क्षणिकतया द्वितीयक्षणे एव स्वसामग्रीवशात् नाशसम्भवेन न तन्नाशाय प्रयत्नापेक्षेत्यतः अनागतावस्थसूक्ष्मदुःखानामेव परिहारस्य सर्व्वैरिष्यमाणत्वात् तस्यैव पुरुषार्थत्वम्। अतएव समानतन्त्रे—पातञ्जले "हेयं दुःखमनागतमित्युक्तम्"। निवृत्तिश्च कारणे तिरोभावः तथा च यावत् चित्तरूपकारणसत्ता तावत् दुःखसत्त्वमनुमीयते सति च कारणनाशे दुःखस्यात्यन्तिकसमुच्छेदः सति तु कारणे कार्य्यस्यावश्यम्भावात् नात्यन्तिकसमुच्छेदः। तेन एकैकदुःखव्यक्तेः स्वसामग्रीनाशेन समूलसमुच्छेदाभावान्न तस्यात्यन्तपुरुषार्थत्वम्। आत्यन्तिकदुःखनिवृत्तिश्च न लौकिकसाधनैः भैषज्यादिभिः, नापि वैदिकज्योतिष्टोमादिभिः साध्यते तेषां कियत्कालस्थायिफलजनकत्वेऽपि आत्यन्तिकदुःखनिवृत्तेरजनकत्वात्। अतः समूलदुःखनिवृत्तौ प्रकृतिपुरुषतत्त्वविवेक एव कारणम् नान्यदिति साङ्ख्याचार्य्या-

नाभावश्च। सुतश्चैतत् सर्वार्थं प्रकृतिपुरुषयोरविवेकमूलं हि दुःखं सति तु विवेके अविवेकरूपकारणनाशात् तन्मूल-स्वाधार-चित्तादेः पुरुषाद्विविक्ततया वियोगेन चित्तादेर्नाशात् कुत्राधारे दुःखमुत्पद्यताम्, चित्तदुःखयोर्नाशाच्च कथं वा पुरुषे प्रतिबिम्बेत इति विवेकसाक्षात्कारात् चित्तस्य तद्धर्माणाञ्च नाश इति।

दुःखञ्च आध्यात्मिकमाधिभौतिकमाधिदैविकमिति भेदात् त्रिविधं तत्र आत्मानं मनः शरीरं चाधिकृत्य प्रवृत्तमाध्यात्मिकं तच्च कामाद्युद्भवं व्याध्याद्युद्भवञ्च। भूतानि व्याघ्रचौरादीन्यधिकृत्य प्रवृत्तमाधिभौतिकम्। देवान् विद्युदग्निवज्रादीनधिकृत्य प्रवृत्तमाधिदैविकम्। सर्व्वेषां दुःखानां मनोजन्यत्वेऽपि मनोमात्रजन्यत्वाजन्यत्वाभ्यामवान्तरभेदः। एवं त्रिविधदुःखानलसन्तप्तान् जीवान् संसारचक्रे बम्भ्रम्यमाणानुपलभ्य परमकारुणिकः परमेश्वरः तानुद्दिधीर्षुः देवहूत्यां कपिलनामादिविद्वान् प्रादुर्भूय प्रकृतिपुरुषविवेकाय सृष्टेः प्रकृतिपुरुषसंयोगाधीनत्वं प्रतिपादयन् परमवैराग्य-सम्पादनद्वारा विषयसुखादौ जीवान् निवर्त्तयन् आत्यन्तिक-दुःखनिवारणोपायभूतम् "अथ त्रिविधदुःखात्यन्तनिवृत्तिरत्यन्तपुरुषार्थ इत्यादिकसूत्रजातात्मकं षडध्यायीरूपं शास्त्रम् आसुरिनामानं मुनिमुपलक्ष्यीकृत्य प्रणिनाय तेनापि ततः श्रुत्वा तदर्थानुगुणं संक्षिप्तमपरं शास्त्रं स्वशिष्याय पञ्चशिखायोपदिष्टमेवं लोके प्रचारमुपगतेऽस्मिन् शास्त्रे ईश्वरकृष्णेन विद्वद्वर्येण आख्यायिकापरवादनिराकरणवर्जं षष्टिपदार्थी-प्रतिपादनाय द्वासप्ततिरार्य्या निर्म्मिताः। एतच्छास्त्रस्य तु

"सङ्ख्यां प्रकुर्व्वते यस्मात् प्रकृतिं च प्रचक्षते।
तत्त्वानि च चतुर्व्विंशत् तेन साङ्ख्यं प्रकीर्त्तितम्"

इति महाभारतवाक्यानुसारेण प्रकृतिपुरुषसम्यग्विवेकज्ञानरूपसङ्ख्यायाः, प्रकृत्यादिचतुर्विंशतितत्त्वसङ्ख्यायाश्च प्रतिपादनात् साङ्ख्यशब्दाभिधेयता।

तदिदं शास्त्रं चिकित्साशास्त्रमिव चतुर्व्यूहम् यथा रोगः रोगनिदानं रोगनिवृत्त्युपायः रोगनिवृत्तिरित्येते पदार्थाः चिकित्साशास्त्रगताः एवं हेयं दुःखं, तन्निदानं चित्तादि, तन्निवृत्त्युपायो विवेकसाक्षात्कारः, दुःखनिवृत्तिश्चेत्येते पदार्थाः अत्र शास्त्रे प्राधान्येनोपदिष्टाः प्रसङ्गागतास्तु

प्रकृतेः साम्यावस्थापन्नगुणत्रयात्मिकायाः सर्गभेदेऽप्येकत्वं, सर्गापवर्गरूप-प्रयोजनवत्त्वम्, परार्थतया प्रवृत्तिमत्त्वञ्च, असङ्गस्य चेतनस्य पुरुषस्य प्रकृतिकार्य्येभ्यो भेदः, अकर्तृत्वं, जन्ममरणादिव्यवस्थान्यथानुपपत्तेर्बहुत्वञ्च, प्रकृतेः पुरुषस्य चोभयोः अस्तित्वं, संयोगः, वियोगश्च, स्थूलसूक्ष्म भूतानां स्थितिरित्येते दश पदार्थाः मौलिकाः। तथा अविद्याऽस्मिता–राग-द्वेषाभिनिवेशात्मकाः पञ्च विपर्य्ययाः इन्द्रियादीनां स्वस्वव्यापारेऽसामर्थ्यम्

"बाधिर्य्यं कुष्ठिताऽन्धत्वं जडताऽजिघ्रता तथा।
'मूकता' कौण्यपङ्गुत्वं क्लैव्योदावर्त्तमन्दता" ॥

इत्येकादशविधम्, नवधा तुष्टयोऽष्टधा सिद्धयः तासां विपर्य्ययश्च सप्तदशधा इत्येवमष्टाविंशतिः नवधा तुष्टयोऽष्टौ सिद्धयस्त्वेवं षष्टिः पदार्थाः

"प्रधानास्तित्वमेकत्वमर्थवत्त्वमथान्यता।
पारार्थ्यञ्च तथानैक्यं वियोगो योग एव च ॥
शेषवृत्तिरकर्तृत्वं मौलिकार्थाः स्मृता दश।
विपर्य्ययः पञ्चविधस्तथोक्ता नव तुष्टयः ॥
करणानामसामर्थ्यमष्टाविंशतिधा मतम्।
इति षष्टिः पदार्थानामष्टाभिः सिद्धिभिः सह" ॥

इति राजवार्त्तिकोक्ता उपदिष्टाः। प्रकृतिपुरुषविवेकोपदेशाय प्रवृत्तं शास्त्रं प्रथमं चेतनाचेतनत्वेन पदार्थद्वैविध्यं सूचयांबभूव। तत्र चेतनाः पुरुषा जन्मादिव्यवस्थान्यथानुपपत्तेर्बहवः। प्रकृत्यादयः त्रयोविंशतिः संहत-परार्थाः अचेतनाश्च। तथापि पुरुषस्य भोगापवर्गार्थं वत्सवृद्ध्यर्थं क्षीरमिव प्रवर्त्तन्ते। तत्प्रवृत्तौ च अनाद्यविद्या मिथ्याज्ञानजन्यवासनासहकृता पुरुषेण संयोगं सम्पादयन्ती हेतुः। पुरुषसंयुक्ता च साम्यावस्थापन्नगुणत्रयात्मिका प्रकृतिः स्वकार्य्यमहत्तत्त्वाकारेण परिणमते इदमित्थमेवेतिनिश्चयात्मकवृत्ति-विशिष्टमन्तःकरणमेव महत्तत्त्वसंज्ञकम्, तच्च इदं मम अनेनाहं कार्य्यं निष्पादयामीत्येवमहङ्कारात्मकवृत्तिविशिष्टान्तरकरणरूपाऽहङ्काराकारेण परिणमते। सोऽपि सूक्ष्मभूत-शब्दतन्मात्रस्पर्शतन्मात्ररूपतन्मात्र-रसतन्मात्रगन्धतन्मात्राकारेण परिणमते। तानि च श्रोत्रत्वङ्नयनरसना-

जिह्वाख्य-पञ्चज्ञानेन्द्रिय-वाक्पाणिपादपायूपस्थाख्य-पञ्चकर्मेन्द्रिय-सङ्कल्प-विकल्पात्मकचित्तमनोरूपेण, आकाशवायुज्वलनजलभूमिरूपमहाभूताकारेण च परिणमन्ते। तदेते चतुर्विंशतिः पदार्थाः "प्रकृतेर्महान्, महतोऽहङ्कारः, अहङ्कारात् पञ्चतन्मात्राणि, तन्मात्रेभ्य एकादशेन्द्रियाणि पञ्चभूतानि" चेति सूत्र्युपदिष्टाः। तेभ्य एव च भौतिकब्रह्माण्डचतुर्विधप्राणिदेहादीनामुत्पत्तिः। प्रकृतिश्चैवं भूयोभूयः स्वव्यापारान् पुरुषाय दर्शयित्वा भूयोभूयो भुज्यमानेषु तेषु क्रमशः पुरुषस्य वैराग्यमुत्पाद्य आत्मात्मकार्येभ्यः पुरुषस्य विवेकज्ञानं साधयित्वा च दृष्टात्मविवेकं पुरुषं प्रति स्वव्यापारदर्शनेन कृतकृत्यतया निवर्त्तते। तन्निवृत्तौ च तत्कार्यसकलपदार्थव्यापारनिवृत्तिरित्यतः सकार्यप्रकृति वृत्तिनिवारणाय प्रयत्नः कार्यः। तन्निवृत्तिश्च विवेकज्ञानसाध्या इत्येवं विवेकसाधनायेदं शास्त्रं प्रवृत्तम्। विवेकश्च यत् वस्तु यथास्थितम् तत्तथारूपेण ज्ञानम् तत्र पुरुषस्य निःसङ्गतया क्रियाशून्यतया चापरिणामित्वेन कर्तृत्वाभावात् प्रकृतिकार्यबुद्धिरेव कर्त्री कृतिसमानाधिकरण्येनैव तत्फलस्य सुखदुःखादेः तन्निष्ठतैव पुरुषे तु प्रधानकार्यबुद्धेश्चिदात्मनि प्रतिबिम्बनात् दुःखादेरपि पुरुषे प्रतिबिम्बनं तेन च पुरुष उपतप्यते, बुद्धेर्दुःखनिवृत्तौ च नैव तस्योपताप इत्यतः प्रतिबिम्बरूपदुःखभोक्तृत्वेन आत्मानं जानन् पुरुष उपतप्यमान इव भवति। ततश्च प्रकृतेर्भिन्नतया तत्कार्यसुखादिशून्यतया ज्ञातः पुरुषः प्रतिबिम्बाकारैः दुःखैर्न संबध्यते इत्येवं प्रकृत्यादीनां त्रयोविंशानां पुरुषस्य च असाधारणधर्मविशेषकथनद्वारा तयोर्विवेकज्ञानोपयोग्युपदेशायैवेदम् प्रवृत्तम् यथा च तयोर्विवेकस्तथा शास्त्रे तन्मूलके अस्मिन् द्वासप्ततिकारिकात्मके प्रबन्धे च आख्यायिकापरवादनिराकरणवर्जमीश्वरकृष्णेन दर्शितम्।

ईश्वरकृष्णस्य विद्वदग्रणीः कतममन्वयं कतमञ्च जनपदमलञ्चकार तन्नाकलयामः किन्तु शङ्कराचार्यादयं प्राचीन इत्येव निर्णीयते शारीरकभाष्ये हि आचार्यस्वामिभिस्तदीयकारिकाया धृतत्वेन तस्य ततः प्राचीनत्वावगमात्।

वाचस्पतिमिश्रस्तु तां द्वासप्ततिश्लोकीं कौमुद्याख्यव्याख्ययालञ्चकार तेनं चार्य्यमिश्रेण षट्सु दर्शनेषु टीकाकारीति लोकप्रसिद्धिः। उपलभ्यन्ते

तत्कृताः शारीरकभाष्यव्याख्यारूपभामती, न्यायवार्त्तिकतात्पर्य्यपरिशुद्धि-योगभाष्यविवृति-प्रभृतयश्च बहवो ग्रन्थाः। स तु मिथिलाजनपदं मण्डयामास। किन्तु कस्मिन् काले असौ पण्डितवरः समुत्पेदे तद्विशेषेण नावधार्य्यते किन्तु तत्त्वचिन्तामणिकृतो गङ्गेशोपाध्यायात् प्राचीन इत्येव निर्णेतुं शक्यते तेन हि स्वग्रन्थे "प्रत्यक्षपरिकलितमप्यर्थमनुमानेन बुभुत्सन्ते तर्करसिकाः इति" "नहि करिणि दृष्टे चित्कारेण तमनुमिमतेऽनुमातार" इति। वाचस्पतिवचनयोरविरोधइति वदता स्वस्मात् प्राचीनता तस्य सूचिता। एवं खण्डनकृतः श्रीहर्षाच्च तस्याप्राचीनता वाचस्पतिमिश्रेण हि खण्डनकृत् प्रदत्तन्यायदूषणानां समुद्धारार्थः खण्डनोद्धारनामा प्रबन्धो निरमायि इत्येवं चिन्तामणिकृतः गङ्गेशोपाध्यायात् प्राक्, खण्डनखण्डखाद्य-नैषधादि ग्रन्थकृतः श्रीहर्षाच्च पश्चात्, तेनाविर्भूय धरणीमण्डलं मण्डनायितमित्यनुमीयते।

वाचस्पतिवचनन्तु अतीवगभीराशयं तस्य विशदताकरणाय अन्यविवृते र्लोके प्रचुरप्रचाराभावेन एषा विवृति र्मयाऽकारि।

वाचस्पतिवचनस्यातिगम्भीरार्थत्वेऽपि यथामति गुरूपदेशानुसारेणैव तद्विवृतिः कृता। अस्याश्च सदसत्त्वविवेचनाय सुधियएव प्रभवन्ति।

विनयाञ्जलियाचिताश्च साधवः प्रमादात् मम स्खलितदोषपरिहारेण एतस्याः पठनपाठनादौ यत्नसम्पादनेन मम श्रमं सफलयन्तु।

एतन्मुद्राकाले च संस्कृत-पाठशालास्थे-देवाक्षरवङ्गाक्षरलिखिते द्वे पुस्तके पूर्व मुद्रित मेकं पुस्तकं, स्वहस्तलिखितमेकं च पुस्तकमित्येवं पुस्तकचतुष्टयं समासादितं तेषां दर्शनेन बहुपुस्तक संवादि पाठग्रहणेनैवेदं मुद्रितम्। अस्य च संस्कारविषये यावान् परिश्रमः समपेक्षित स्तावान् मयाऽकारि तथापि प्रमादात् स्खलितं विद्वांसः संस्कुर्वन्तु शिवम्

गवर्णमेण्ट संस्कृत पाठशालास्थाध्यापक

श्री तारानाथ शर्म्मणः

# तत्त्वकौमुदी।

अजामेकां लोहितशुक्लकृष्णां
बह्वीः प्रजाः सृजमानां नमामः।
अजा ये तां जुषमाणां भजन्ते
जहत्येनां भुक्तभोगां नुमस्तान् ॥१॥
कपिलाय महामुनये मुनये शिष्याय तस्य चासुरये।
पञ्चशिखाय तथेश्वरकृष्णायैतान् नमस्यामः॥

---

ईशं मनसि संस्कृत्य श्रीतारानाथशर्म्मणा।
वाचस्पतिवचोऽस्पष्टं सुस्पष्टं क्रियते मया॥
क्व च मन्दमनीषा मे क्व च वाचस्पतेर्वचः।
चेतसा चिन्तितो भूयात् स एष मम बुद्धिदः॥

(१) न जायते इत्यजां नित्यामित्यर्थः नित्यत्वकथनन्तु तस्याः सर्व्वकारणत्वोपपत्तये। अनवस्थाराहित्याय परमाणूनां निराकरणाय च तां विशिनष्टि एकामिति सजातीयद्वितीयरहितामित्यर्थः। नन्वेकस्या विचित्रद्रव्यादिनानाविधकारणत्वासम्भवेन कथं सर्व्वकारणत्वोपपत्तिरित्याशङ्क्याह लोहितेत्यादि रजःसत्त्वतमोगुणात्मिकामित्यर्थः गुणभेदात्तदुपपत्तिरिति भावः। लोहितशब्दवाच्यरजोगुणस्य प्रवर्त्तकत्वेन प्राधान्यात् प्रथमनिर्द्देशः। रञ्जनप्रकाशनावरणरूपगुणयोगेन तस्या रजआदिगुणात्मकत्वम्। ये पुरुषाः भुक्तभोगां सम्पादितभोगाम्, तां जहति तान् नुम इत्यन्वयः।

इह खलु प्रतिपित्सितमर्थं प्रतिपादयन् प्रतिपादयिताऽवधेयवचनो भवति प्रेक्षावताम्, अप्रतिपित्सितन्तु प्रतिपादयन्नायं लौकिको नापि परीक्षक (१) इति प्रेक्षावद्भिरुन्मत्तवदुपेक्ष्येत। स चैषां (२) प्रतिपित्सितोऽर्थो यो ज्ञातः सन् परमपुरुषार्थाय कल्पत इति प्रारिप्सितशास्त्रविषयज्ञानस्य परमपुरुषार्थसाधनहेतुत्वात्तद्विषयजिज्ञासामवतारयति।

**दुःखत्रयाभिघाताज्जिज्ञासा तदवघातके हेतौ।**
**दृष्टे साऽपार्था चेन्नैकान्तात्यन्ततोऽभावात्॥ १॥**

एवं हि शास्त्रविषयो न जिज्ञास्येत यदि दुःखं नाम जगति न स्यात्, सद्वा न जिहासितं, जिहासितं वा अशक्यसमुच्छेदम्, अशक्यसमुच्छेदता च द्वेधा दुःखस्य नित्यत्वाद्वा तदुच्छेदोपायापरिज्ञानाद्वा, शक्यसमुच्छेदत्वेऽपि च शास्त्रविषयस्य ज्ञानस्यानुपायत्वाद्वा सुकरस्योपायान्तरस्य सद्भावाद्वा। तत्र न तावत् दुःखं नास्ति, नाप्यजिहासितमित्यत उक्तं दुःखत्रयाभिघातादिति। दुःखानां त्रयं दुःखत्रयं तत् खलु आध्यात्मिकमाधिभौतिकमाधिदैविकञ्च तत्राध्यात्मिकं द्विविधं शारीरं मानसञ्च। शारीरं वातपित्तश्लेष्मणां वैषम्यनिमित्तं, मानसं

---

(१) न्यायेन पदार्थनिर्णायकः।

(२) एषां प्रेक्षावतां बुद्धिपूर्वकारिणां समीक्ष्यकारिणामिति यावत्।

कामक्रोधलोभमोहभयेर्ष्याविषादविषयविशेषादर्शननिबन्धनम्। सर्वं चैतदान्तरोपायसाध्यत्वादाध्यात्मिकं दुःखम्। बाह्योपायसाध्यञ्च दुःखं द्वेधा आधिभौतिकमाधिदैविकञ्च तत्राधिभौतिकं मानुषपशुपक्षिसरीसृपस्थावरनिमित्तम्। आधिदैविकं यक्षराक्षसविनायकग्रहावेशनिबन्धनम्। तदेतत् प्रत्यात्मवेदनीयं दुःखं रजःपरिणामभेदो न शक्यते प्रत्याख्यातुम्। तदनेन दुःखत्रितयेनान्तःकरणवर्त्तिना चेतनाशक्तेः प्रतिकूलतयाभिसम्बन्धोऽभिघात इति। एतावता प्रतिकूलवेदनीयत्वं जिज्ञासाहेतुरुक्तः। यद्यपि न सन्निरुध्यते (१) दुःखं तथापि तदभिभवः शक्यः कर्त्तुमित्युपरिष्टान्निवेदयिष्यते। तस्मादुपपन्नं तदवघातके हेताविति। तस्य दुःखत्रयस्यावघातकस्तदवघातक उपसर्जनस्यापि (२) बुद्धा समाकृष्टस्य तदा परामर्शः। अवघातकस्य हेतुः शास्त्रप्रतिपाद्यो नान्य इत्याशयः।

अत्राशङ्कते दृष्टे सापार्था चेदिति। अयमर्थः (३) अस्तु दुःखत्रयं, जिज्ञासितञ्च तद्भवतु, भवतु च तत् शक्यहानं, सहताञ्च शास्त्रगम्य उपायस्तदुच्छेत्तुम्, तथाप्यत्र प्रेक्षावतां न युक्ता जिज्ञासा दृष्टस्यैवोपायस्य तदुच्छेदकस्य सुकरस्य विद्यमानत्वात्।

---

(१) समूलमुच्छिद्यते। अभिभवः विनाशसामग्रीसम्पादनकृतः प्रतिरोधः।

(२) दुःखत्रयाभिघातरूपसमासे विशेषणीभूतस्य दुःखत्रयस्य।

(३) अयमर्थ इति सापार्थेत्याशङ्काग्रन्थस्यायमर्थ इत्यर्थः।

तथा च लौकिकानामाभाणकः अर्के(के)(१) चेन्मधु विन्देत किमर्थं पर्व्वतं व्रजेत् । इष्टस्यार्थस्य संसिद्धौ को विद्वान् यत्नमाचरेदिति । सन्ति चोपायाः शतशः शारीरदुःखप्रतीकारायेषत्कराः भिषजां वरैरुपदिष्टाः, मानसस्यापि सन्तापस्य प्रतीकाराय मनोज्ञस्त्रीपानभोजनविलेपनवस्त्रालङ्कारादिविषयप्राप्तिरुपायः सुकरः एवमाधिभौतिकदुःखस्य नीतिशास्त्राभ्यासकुशलतानिरत्ययस्थानाध्यासनादिः प्रतीकारहेतुरीषत्करः। तथाधिदैविकस्यापि दुःखस्य मणिमन्त्रौषधाद्युपयोगः सुकरः प्रतीकारोपाय इति।

निराकरोति नेति कुतः, एकान्तात्यन्ततोऽभावात् एकान्तो दुःखनिवृत्तेरवश्यम्भावः अत्यन्तो निवृत्तस्य दुःखस्य पुनरनुत्पादस्तयोरेकान्तात्यन्तयोरभाव, एकान्तात्यन्ततोऽभाव इति। षष्ठीस्थाने सार्व्वविभक्तिकस्तसिल्। एतदुक्तं भवति यथा विधिरसायनादिकामिनीनीतिशास्त्राभ्यासमन्त्राद्युपयोगेऽपि तस्य तस्याध्यात्मिकादेर्दुःखस्य निवृत्तेरदर्शनादनैकान्तिकत्वं, निवृत्तस्यापि पुनरुत्पत्तिदर्शनादनात्यन्तिकत्वमिति सुकरोऽप्यैकान्तिकात्यन्तिकदुःखनिवृत्ते र्न दृष्ट(२) उपाय इति न अपार्थी जिज्ञा-

(१) आभाणकः प्रसिद्धप्रवादः। अर्कै अर्कवृक्षे (अर्के स्ट्टकोणे)।

(२) दृष्टः लोकसिद्धः सुकरोऽपि उपाय स्तथाभूत दुःनिवृत्तेनोंपाय इत्युपायपदमावर्त्त्य योजनीयमेवमग्रेऽपि।

मेत्यर्थः । यद्यपि दुःखममङ्गलं तथापि तत्परीहारार्थत्वेन तदवघातो मङ्गलमेवेति युक्तं शास्त्रादौ तत्कीर्त्तनमिति ॥ १ ॥

स्यादेतत् मा भूद्दृष्ट उपायो, वैदिकस्तु ज्योतिष्टोमादिः संवत्सरपर्य्यन्तः कर्म्मकलापस्तापत्रयमैकान्तमत्यन्तञ्चापनेष्यति, श्रूयते हि "स्वर्गकामोयजेतेति," स्वर्गश्च "यन्न दुःखेन सम्भिन्नं न च ग्रस्त (१) मनन्तरम् । अभिलाषोपनीतञ्च तत् सुखं स्वःपदास्पदमिति" दुःखविरोधी सुखविशेषः । स च स्वर्गः स्वसत्तया समूलघातमवहन्ति दुःखं, न चैष क्षयी तथा हि श्रूयते "अपाम सोममम्मृता अभूमेति" तदक्षये कुतोऽस्यामृतत्वसम्भवः। तस्माद्वैदिकस्योपायस्य तापत्रयप्रतीकारहेतोर्मुहूर्त्तयामाहोरात्रमाससंवत्सरादिनिर्वर्त्तनीयतयानेकजन्मपरम्परायाससम्पादनीयाद् विवेकज्ञानादीषत्करत्वात् पुनरप्यपार्था जिज्ञासा इत्याशङ्क्याह ।

**दृष्टवदानुश्रविकः स ह्यविशुद्धिक्षयातिशययुक्तः ।**
**तद्विपरीतः श्रेयान् व्यक्ताव्यक्तज्ञविज्ञानात् ॥ २ ॥**

गुरुपाठादनुश्रूयते इत्यनुश्रवो वेदः एतदुक्तं भवति श्रूयत एव परं न तु केनचित् क्रियत इति तत्र भवः आनुश्रविक इति तत्र प्राप्तो ज्ञात इति यावत् आनुश्रविकोऽपि कर्म्मकलापो

---

(१) अनन्तरमुत्तरकालं ग्रस्तं दुःखपरिभूतम् ।

दृष्टेन तुल्यो वर्त्तत इति ऐकान्तिकात्यन्तिकदुःखप्रतीकारानुपायत्वस्योभयत्रापि तुल्यत्वात्। यद्यपि चानुश्रविक इति सामान्येनाभिहितं तथापि कर्म्मकलापाभिप्रायो द्रष्टव्यः विवेकज्ञानस्याप्यानुश्रविकत्वात् तथाच श्रूयते "आत्मा वा अरे ज्ञातव्यः" प्रकृतितो विवेक्तव्यः (१) "न स पुनरावर्त्तते" इति। अस्यां प्रतिज्ञायां हेतुमाह स ह्यविशुद्धिक्षयातिशययुक्तः अविशुद्धिः सोमादियागस्य पशुवीजादिबधसाधनता यथाह स्म भगवान् पञ्चशिखाचार्य्यः "स्वल्पसङ्करः सपरिहारः सप्रत्यवमर्ष" इति। स्वल्पसङ्करः ज्योतिष्टोमादि जन्मनः प्रधानापूर्वस्य स्वल्पेन पशुहिंसादिजन्मनानर्थहेतुना अपूर्वेण सङ्करः (२) सपरिहारः कियतापि प्रायश्चित्तेन परिहर्त्तुं शक्यः। अथ प्रमादतः प्रायश्चित्तमपि नाचरितं प्रधानकर्म्मविपाकसमये च पच्यते (३) तथापि यावदसावनर्थं सूते तावत् सप्रत्यवमर्षः प्रत्यवमर्षेण सहिष्णुतया सह वर्त्तत इति स्पृश्यन्ते हि पुण्यसम्भारोपनीतस्वर्गसुधामहाह्रदावगाहिनः कुशलाः पापमात्रोपपादितां दुःखवह्निकणिकाम्।

---

(१) ज्ञातव्य इत्येतस्य विवरणं प्रकृतितो विवेक्तव्य इति नत्वयं श्रुतिपाठः।

(२) सङ्करः संसर्गः सामानाधिकरण्यमिति यावत्।

(३) दुःखरूपेण परिणमते दुरितेन दुःखमनुभूयते इत्यर्थः।

न च "मा हिंस्यात् सर्व्वाभूतानीति" सामान्यशास्त्रं विशेषशास्त्रेण "अग्नीषोमीयं पशुमालभेतेत्यनेन" बाध्यत इति युक्तं विरोधाभावात् विरोधे हि बलीयसा दुर्बलं बाध्यते। नचेहास्ति कश्चित् विरोधः भिन्नविषयत्वात्। तथा हि "मा हिंस्यादिति" निषेधेन हिंसाया अनर्थहेतुभावो ज्ञाप्यते न त्वक्रत्वर्थत्वमपि "अग्नीषोमीयं पशुमालभेते"त्यनेन तु पशुहिंसायाः क्रत्वर्थत्वमुच्यते न त्वनर्थहेतुत्वाभावस्तथा सति वाक्यभेदप्रसङ्गात् न चानर्थहेतुत्वक्रतूपकारकत्वयोः कश्चिदस्ति विरोधः। हिंसा हि पुरुषस्य दोषमावच्यति क्रतोश्चोपरिकरिष्यति। क्षयातिशयौ च फलगतावप्युपाये उपचरितौ क्षयित्वञ्च स्वर्गादेः सत्त्वे सति कार्य्यत्वादनुमितमिति। ज्योतिष्टोमादयः स्वर्गमात्रस्य साधनं, वाजपेयादयस्तु स्वाराज्यस्येत्यतिशयवत्त्वम्। युक्तञ्च परसम्पदुत्कर्षो हीनसम्पदं पुरुषं दुःखाकरोतीति। "अपाम सोमममृता अभूमेति" चामृतत्वाभिधानं चिरस्थेमान (१) मुपलक्षयति यदाहुः "आभूतसंप्लवं (२) स्थानममृतत्वं हि भाष्यत" इति अतएव च श्रुतिः "न कर्म्मणा न प्रजया न धनेन त्यागेन (३) नैके अमृतत्वमानशुः"। "परेण (४) नाकं निहितं गुहायां विभ्राजते

---

(१) चिरस्थायित्वम्।

(२) भूतानां सम्प्लवः प्रलयस्तत्पर्य्यन्तस्थायि।

(३) त्यागेन दानादिना। त्यागेनैके इति पाठे अभिमानत्यागेनेत्यर्थः।

(४) परेण कर्म्मादिभिन्नेनैवोपायेन गुहायां हृदि निहितं नाकं सुखा-

यद्यतयो विशन्ति"। तथा, "कर्म्मणा मृत्युमृषयो निषेदुः प्रजावन्तो द्रविणमीहमानाः"। तथा, "परे ऋषयोमनीषिणः परं कर्म्मभ्योऽमृतत्वमानशु" रिति। तदेतत्सर्वमभिप्रेत्याह तद्विपरीतः श्रेयान् तस्मादानुश्रविकाद्दुःखापघातकादुपायात् सोमादेरविशुद्धादनित्यसातिशयफलाद्विपरीतोविशुद्धो हिंसादिसङ्कराभावान्नित्यनिरतिशयफलोऽसकृत्पुनरावृत्तिश्रुतेः। नच कार्य्यत्वेनानित्यता (१) फलस्य युक्ता भावकार्य्यस्य तथात्वात् (२) दुःखप्रध्वंसस्य तु कार्य्यस्यापि तद्वैपरीत्यात्। न च दुःखान्तरोत्पादः कारणप्रवृत्तौ कार्य्योत्पादात् विवेकज्ञानोपजननपर्य्यन्तत्वाच्च कारणप्रवृत्तेः एतच्चोपरिष्टादुपपादयिष्यते (३)। अक्षरार्थस्तु तस्मादानुश्रविकाद्दुःखापघातकाद्वे-

---

त्मकं दुःखाभावरूपं परं वस्तु विभ्राजते प्रकाशते यतयः प्रकृतिविवेकसाक्षात्कारिणो यत् परं परमं विशन्ति अविविक्ततया एकीभवन्ति।

(१) फलमनित्यं कार्य्यत्वात् घटादिवदित्यनुमानेन फलस्यानित्यतैव सिद्धेति भावः।

(२) तथात्वादनित्यत्वात् तथाच घटादिध्वंसे व्यभिचारवारणाय भावकार्य्यत्वस्यैव अनित्यतासाधकत्वमुपेरं, प्रकृते च दुखध्वंसस्य अभावरूपत्वेन भावत्वाभावान्नानित्यत्वसिद्धिरिति भावः।

(३) "पुरुषस्य तथात्वं प्रकाश्य निवर्त्तते प्रकृति" रित्यत्र।

तोऽविपरीतः सत्वपुरुषान्यताप्रत्ययः तत्साक्षात्कारो दुःखापघा-
तकोहेतुः अतएव श्रेयान् आनुश्रविको हि वेदविहितत्वा-
च्मातया दुःखापघातकत्वाच्च प्रशस्यः सत्वपुरुषान्यताप्रत्ययोऽपि
प्रशस्यः तदनयोः प्रशस्ययोर्मध्ये सत्वपुरुषान्यताप्रत्ययः श्रेयान् ।
कुतः पुनरस्योत्पत्तिरित्यत उक्तं व्यक्ताव्यक्तज्ञविज्ञानात् व्यक्त-
ञ्चाव्यक्तञ्च ज्ञश्च व्यक्ताव्यक्तज्ञाः तेषां विज्ञानं विवेकेन ज्ञानम् ।
व्यक्तज्ञानपूर्वकमव्यक्तस्य तत्कारणस्य ज्ञानं (१) तयोश्च पा-
रार्थ्ये नात्मा (२) परो ज्ञायतइति ज्ञानक्रमेणाभिधानम् ।
एतदुक्तम्भवति श्रुतिस्मृतीतिहासपुराणेभ्योव्यक्तादीन् विवेकेन
श्रुत्वा शास्त्रयुक्त्या च व्यवस्थाप्य दीर्घकालादरनैरन्तर्य्यसत्कार-
सेविताद्भ्यासात् (३) भावनामयाद्विज्ञानमिति तथाच वक्ष्यति
"एवं तत्त्वाभ्यासान्नास्मि न मे नाहमित्यपरिशेषम् । अविप-
र्य्ययाद्विशुद्धं केवलमुत्पद्यते ज्ञान" मिति ॥२॥

तदेवं प्रेक्षावदपेक्षितार्थत्वेन शास्त्रारम्भं समाधाय शा-

---

(१) मृदादिकं सजातीयकारणकं कार्य्यत्वात् मृत्कारणकघटादिवदि-
त्यनुमानेन मृदादिना व्यक्तेनाव्यक्तानुमानमित्यर्थः ।

(२) व्यक्ताव्यक्तादयः परार्थाःसंभूयकारित्वात्गृहादिवदित्यनुमानेन-
तद्भिन्नतया पुरुषो ज्ञेयः इति सर्व्वशेषे तन्निर्द्देशः ।

(३) "एष हि परमो धर्मो यद्योगेनात्मदर्शन" मित्युक्तेर्योगस्यापि धर्म
रूपत्वं शास्त्रसिद्धमित्युक्तं धर्म्मादिति ।

स्वमारभमाणः श्रोतृबुद्धिसमवधानाय तदर्थं संक्षेपतः प्रतिजानीते।

**मूलप्रकृतिरविकृतिर्महदाद्याः प्रकृतिविकृतयः सप्त।**
**षोड़शकस्तु विकारोन प्रकृतिर्न विकृतिः पुरुषः ॥३॥**

संक्षेपतो हि शास्त्रार्थस्य चतस्रोविधाः कश्चिदर्थः प्रकृतिरेव, कश्चिदर्थौविकृतिरेव, कश्चित् प्रकृतिविकृतिरेव, कश्चिदनुभयरूप इति ! तत्र का प्रकृतिरेवेत्यत उक्तम् मूलप्रकृतिरविकृतिरिति प्रकरोतीति प्रकृतिः प्रधानं सत्वरजस्तमसां साम्यावस्था (१) सा अविकृतिः प्रकृतिरेवेत्यर्थः कस्मादित्यत उक्तम् मूलेति मूलञ्चासौ प्रकृतिश्चेति मूलप्रकृतिः विश्वस्य कार्य्यसंघातस्य सा मूलं नत्वस्या मूलान्तरमस्ति अनवस्थाप्रसङ्गात् न चानवस्थायां प्रमाणमस्तीति भावः ! कतमाः पुनः प्रकृतिविकृतयः कियत्यश्चेत्यत उक्तम् महादाद्याः प्रकृतिविकृतयः सप्तेति॥ प्रकृतयश्च ता विकृतयश्च ता इति। तथाहि महत्तत्त्वमहङ्कारस्य प्रकृतिर्विकृतिश्च मूलप्रकृतेः, एवमहङ्कारतत्त्वं तन्मात्राणामिन्द्रियाणाञ्च प्रकृतिर्विकृतिश्च महतः। एवं पञ्चतन्मात्राणि भूतानामाकाशादीनां प्रकृतयोविकृतयश्चाहङ्कारस्य।

---

(१) साम्यं गुणप्रधानभावशून्यता तथाच साम्यावस्थापन्नगुणत्रयमेव प्रकृतिरिति तात्पर्य्यार्थः।

अथ का विकृतिरेव कियती चेत्यतउक्तं षोड़शकस्तु विकार इति षोड़शसंख्यापरिमितोगणः षोड़शकः तुशब्दोऽवधारणे भिन्नक्रमश्च पञ्च महाभूतान्येकादशेन्द्रियाणि चेति षोड़शको गणो विकार एव न प्रकृतिरिति। यद्यपि च पृथिव्यादीनामपि गोघटवृक्षादयो विकाराः एवं तद्विकारभेदानां दध्यङ्कुरादय (१) स्तथापि गवादयो बीजादयो वा न पृथिव्यादिभ्यस्तत्त्वान्तरं (२) तत्त्वान्तरोपादानत्वञ्च प्रकृतित्वमिहाभिप्रेतमिति न दोषः सर्व्वेषां गोघटादीनां स्थूलतेन्द्रियग्राह्यता (३) च समेति न तत्त्वान्तरत्वम्। अनुभयरूपमुक्तं (४) तदाह न प्रकृतिर्न विकृतिः पुरुषइति एतच्च सर्व्वमुपरिष्टादुपपादयिष्यते (५)॥ ३॥

तमिममर्थं प्रामाणिकं कर्त्तुमभिमताः प्रमाणभेदा लक्षणीयाः न च सामान्यलक्षणमन्तरेण शक्यं विशेषलक्षणं कर्त्तुमिति प्रमाणसामान्यं तावल्लक्षयति।

---

(१) विकारा इत्यनुषञ्जनीयम्।

(२) पदार्थविभाजकोपाध्यन्तरवत्त्वं तत्त्वान्तरत्वं प्रकृते च तदुपाधेरेकत्वान्न तत्त्वान्तरत्वम्।

(३) स्थूलतेन्द्रियग्राह्यता चोपाधिभिन्नत्वे प्रयोजिका न तु तत्त्वान्तरत्वे इति द्रष्टव्यम्।

(४) कार्य्यं कारणसजातीयं कार्य्यत्वात् मृज्जातीयमृदुत्पन्नघटवत् पुरुषस्तु तयोर्विजातीयत्वान्न कार्य्यकारणोभयरूपइति भावः।

(५) "गुणकर्त्तृत्वे च तथेत्यु" पक्रम्य प्रकृतेर्महानित्यादि" वक्ष्यमाणकारिकाव्याख्यानग्रन्थे।

**दृष्टमनुमानमाप्तवचनं च सर्व्वप्रमाणसिद्धत्वात् ।**
**त्रिविधम्प्रमाणमिष्टम्प्रमेयसिद्धिः प्रमाणाद्धि ॥४॥**

अत्र च प्रमाणमिति समाख्यया (१) लक्ष्यपरं तन्निर्वचनञ्च (२) लक्षणम् प्रमीयतेऽनेनेति निर्वचनात् प्रमां प्रति करणत्वं गम्यते। असन्दिग्धाविपरीतानधिगतविषया ( ३ ) चित्तवृत्तिर्बोधस्य फलं प्रमा तत्साधनम्प्रमाणमिति । एतेन संशयविपर्य्ययस्मृतिसाधनेषु प्रमाणेषु (४) न प्रसङ्गः। संख्या विप्रतिपत्तिं निराकारोति त्रिविधमिति तिस्रो विधा अस्य प्रमाणसामान्यस्य त्रिविधमिति न न्यूनं नाप्यधिकमित्यर्थः। विशेषलक्षणानन्तरञ्चैतदुपपादयिष्यामः।कतमाः पुनस्ता विधा इत्यत आह दृष्टमनुमानमाप्तवचनं चेति एतच्च लौकिकप्रमाणाभिप्रायम् लोकव्युत्पादनार्थत्वाच्छास्त्रस्य तस्यैवात्रा-

---

( १ ) समा तुल्या समानानुपूर्व्वीकेति यावत् आख्यायते इत्याख्या उच्चारणं तथाच तन्त्रेण सकृदुच्चारितमपि प्रमाणपदं द्विधावर्त्तनीयं तत्रैकं लक्षणपरमित्यर्थः ।

( २ ) तन्निर्वचनं तस्य प्रमाणपदस्य यत् निर्व्वचनं निरुक्तिरवयवार्थ इति यावत् तदेव लक्षणम् । तन्निर्व्वचनस्वरूपमाह प्रमीयतेऽनेनेत्यादि तथाच प्रमाकरणं प्रमाणं प्रमाणपदप्रतिपाद्यमिति समुदितार्थ स्तेन घटो घट इत्यादिवन्नायोग्यता ।

( ३ ) असंदिग्धः निश्चितः, अविपरीतः अबाधितः, अनधिगतः अज्ञातो विषयो यस्यास्तथाभूतेत्यर्थः ।

( ४ ) प्रमाणेषु प्रमाणाभासेषु ज्ञानसाधनेष्वित्यर्थः ।

धिकारात् । आर्षन्तु विज्ञानं योगिनामूर्द्ध्वस्रोतसां-(१) न लोकव्युत्पादनायालमिति सदपि नाभिहितमनधिकारात्। स्यादेतत् मा भून्न्यूनम्, अधिकन्तु कस्मान्न भवति,सन्ति हि वादिन उपमानादीन्यपि प्रमाणानीत्यत आह सर्व्वप्रमाणसिद्धत्वादिति एष्वेव दृष्टानुमानाप्तवचनेषु सर्व्वेषां प्रमाणानां सिद्धत्वादन्तर्भावादित्यर्थः। एतच्चोपपादयिष्याम इत्युक्तम्। अथ प्रमेयव्युत्पादनाय प्रवृत्तं शास्त्रं कस्मात् प्रमाणं सामान्यतोविशेषतश्च लक्षयतीत्यत आह प्रमेयसिद्धिः प्रमाणाद्धीति सिद्धिः प्रतीतिः। सेयमार्य्या अर्थक्रमानुरोधेन पाठक्रममनादृत्यैवं व्याख्याता ॥ ४ ॥

सम्प्रति प्रमाणविशेषलक्षणावसरे प्रत्यक्षस्य प्रमाणेषु ज्येष्ठत्वात्तदधीनत्वाच्चानुमानादीनां सर्ववादिनामविप्रपत्तेश्च तदेव तावल्लक्षयति ।

**प्रतिविषयाध्यवसायो दृष्टं त्रिविधमनुमानमाख्यातम्। तल्लिङ्गलिङ्गिपूर्वकमाप्तश्रुतिराप्तवचनन्तु ॥ ५ ॥**

अत्र दृष्टमिति लक्ष्यनिर्द्देशः परिशिष्टन्तु लक्षणं समानासमानजातीयव्यवच्छेदोलक्षणार्थः (२)। अवयवार्थस्तु विषि-

---

(१) आकुमारब्रह्मचारिणामथवा ऊर्द्ध्वं विषयेभ्य ऊर्द्ध्वं स्रोतोज्ञानप्रवाहो येषां तेषामित्यर्थः।

(२) समानजातीयेभ्योऽसमानजातीयेभ्यश्च व्यवच्छिद्यतेऽनेनेति व्युत्पत्तिलभ्यो लक्षणशब्दार्थः।

स्वन्ति विषयिणमनुबध्नन्ति स्वेन रूपेण निरूपणीयं कुर्वन्तीति यावत् विषया: पृथिव्यादय: सुखादयश्चअस्मदादीनामविषयाश्च तन्मात्रलक्षणा योगिनामूर्द्ध्वस्रोतसाञ्च विषया: विषयं विषयं प्रति वर्त्तते इति प्रतिविषयमिन्द्रियं वृत्तिश्च सन्निकर्ष: अर्थसन्निकृष्टमिन्द्रियमित्यर्थ: तस्मिन्नध्यवसायस्तदाश्रितइत्यर्थ: अध्यवसायश्च बुद्धिव्यापारो ज्ञानम्। उपात्तविषयाणामिन्द्रियाणां वृत्तौ सत्यां बुद्धेस्तमोऽभिभवे सति य: सत्वसमुद्रेक: सोऽध्यवसायइति वृत्तिरिति ज्ञानमिति चाख्यायते इदं तावत् प्रमाणम्। अनेन यश्चेतनाशक्तेरनुग्रह(१) स्तत् फलं प्रमाबोध:। बुद्धितत्त्वं हि प्राकृतत्वादचेतनमिति तदीयोऽध्यवसायोऽप्यचेतनो घटादिवत्, एवं बुद्धितत्त्वस्य सुखादयोऽपि परिणामभेदा अचेतना:। पुरुषस्तु सुखाद्यननुषङ्गी चेतन: सोऽयं बुद्धितत्त्ववर्त्तिना ज्ञानसुखादिना तत्प्रतिविम्बितस्तच्छाया-

---

(१) अनुग्रह: वाह्यपदार्थानां प्रतिविम्बताप्रयोजक:चेतने सम्बन्धविशेष: तथाहि विषयादिकमादौ इन्द्रियसन्निकर्षे सतीन्द्रियेषु प्रतिविम्बितं भवति प्रतिविम्बितविषयाणि चेन्द्रियाणि बुद्धौ प्रतिविम्बन्ति तत्प्रतिविम्बान्विता च बुद्धिश्चेतने प्रतिविम्बति एवं सा चिति प्रतिविम्बिता तच्छायापत्त्या प्रकाशते, तत्प्रकाशेन च तद्विषया अपि प्रकाशन्ते "तस्मिंश्चिद्दर्पणे स्फारे समस्ता वस्तुदृष्टय:। इमास्ता: प्रतिविम्बन्ति सरसीव चलद्रुमा:" इत्युक्तदिशा सर्व्वेषां चेतने प्रतिविम्बोऽवसेय. प्रतिविम्बश्च विषयविषयिणो: संबन्धविशेष:।

पत्त्या (१) ज्ञानसुखादिमानिव भवतीति चेतनोऽनुगृह्यते चितिच्छायापत्त्या चाचेतनापि बुद्धिस्तदध्यवसायोऽपि चेतन इव भवतीति। तथा च वक्ष्यति "तस्मात्तत्संयोगादचेतनं चेतनावदिव लिङ्गम्। गुणकर्तृत्वेऽपि तथा कर्त्तेव भवत्युदासीन" इति। अत्राध्यवसायग्रहणेन संशयं व्यवच्छिनत्ति संशयस्य अनवस्थितग्रहणेना(२) निश्चितरूपत्वात् (३) निश्चयोऽध्यवसाय इत्यनर्थान्तरम्। विषयग्रहणेन चासद्विषयं विपर्य्ययमपाकरोति प्रतिग्रहणेन (४) चेन्द्रियार्थसन्निकर्षसूचनादनुमानस्मृत्यादयः पराकृता भवन्ति। तदेवं समानासमानजातीय(५) व्यवच्छेदकत्वात् प्रतिविषयाध्यवसायइति दृष्टस्य सम्पूर्णं लक्ष-

---

(१) तच्छायापत्त्या बुद्धितादात्म्यापत्त्या तथा च धर्मितादात्म्यारोपस्य धर्मसंसर्गारोपप्रयोजकतया पुरुषे बुद्धितादात्म्यारोपे बुद्धिधर्म्माणां सुखादीनां पुरुषे संसर्गारोपात् पुरुषः सुखादिमानिव भवतीत्यर्थः।

(२( एकधर्मिणि नानाधर्मरूपनानाकोटिप्रकाशनेन। समूहालम्बनस्य नानाकोटिकत्वेऽपि तत्र एकधर्मिकत्वाभावान्न तस्य तथात्वम्।

(३) अनिश्चितरूपत्वादेककोटिकत्वाभावात् कोटिश्च परस्परविरुद्धौ भावात्मको भावाभावात्मको वा धर्मविशेषः तत्र स्थाणुर्वा पुरुषो वेत्यादौ भावात्मकः, घटवान्न वेत्यादौ भावाभावात्मक इति भेदः।

(४) नेत्रमेव रूपस्य, श्रोत्रमेव शब्दस्य, घ्राणमेव गन्धस्य, ग्राहकमित्येवं यथा इन्द्रियाणां विषयनियमोऽस्ति नैवमनुमानादीनां तैः रूपादीनां सर्वेषामेव ग्रहणसम्भवादिति प्रतिशब्दग्रहणेन तेषां व्यवच्छेदः।

(५) समानस्य सजातीयस्यानुमानादेरसमानस्य विजातीयस्य घटादेर्व्यवच्छेदकत्वाद्व्यावर्त्तकत्वात्।

णाम् । तन्त्रान्तरे (१) तैर्थिकानां लक्षणान्तराणि तु न दूषितानि विस्तरभयादिति ।

नानुमानम्प्रमाणमिति (२) वदता लौकायतिकेन अप्रतिपन्नः सन्दिग्धो विपर्य्यस्तो वा पुरुषः कथं प्रतिपद्येत नच पुरुषान्तरगता अज्ञानसन्देहविपर्य्यासाः शक्याः अर्व्वाग्दृशा(३) प्रत्यक्षेण प्रतिपत्तुम्, नापि मानान्तरेण, अनभ्युपगमात् अनवधृताज्ञानसंशयविपर्य्यासस्तु यं कञ्चित् पुरुषं प्रति(४) प्रवर्त्तमानोऽनवधेयवचनतया प्रेक्षावद्भिरुन्मत्तवदुपेक्ष्येत । तदनेनाज्ञानादयः परपुरुषवर्त्तिनोऽभिप्रायभेदाद् (५) वचनभेदलिङ्गादनुमातव्या इत्यकामेनाप्यनुमानम्प्रमाणमभ्युपेतव्यम् ।

---

(१) तन्त्रान्तरे शास्त्रान्तरे उक्तानीति शेषः तीर्थं शास्त्रसिद्धान्तं विदन्तीति तैर्थिकास्तेषाम् ।

(२) प्रत्यक्षप्रामाण्ये सर्वेषामेवाविवादात् अनुमानप्रामाण्ये विवदमानं लौकायतिकं प्रत्याह नानुमानमित्यादि लोके आयतं वितत प्रसिद्धमिति यावत् तदेव प्रमाणतया वेत्तीति ठक् लौकायतिकः प्रत्यक्षमात्रप्रमाणवादी चार्वाकस्तेनेत्यर्थः ।

(३) वाह्यदृष्टिमता अयोगिनेति यावत् योगिनस्तु तन्निर्णयसम्भवः ।

(४) विवक्षितार्थं प्रतिपादयितुमिति शेषः ।

(५) अभिप्रायभेदतो यो वचनभेदस्तल्लिङ्गादित्यर्थः अभिप्रायस्त्विच्छाविशेषः सत्याञ्च विवक्षायां वक्ता विवक्षितार्थबोधकवचनरचनायां प्रवर्त्तते इच्छाविशेषे च ज्ञानमेव हेतुरित्यतः अभिप्रायद्योतकवचनेन ज्ञानादिकमपि परकीयमनुमातुं शक्यते । तथाहि अयं जन ईदृशाभिप्रायवान् एवंवचनप्रयोक्तृत्वादिति वचनहेतुना प्रथममभिप्रायमनुमाय पुनस्तल्लिङ्गेन अयं जन

तत्र प्रत्यक्षकार्य्यत्वादनुमानं प्रत्यक्षानन्तरं निरूपणीयम् तत्रापि सामान्यलक्षणपूर्व्वकत्वाद्विशेषलक्षणस्येत्यनुमानसामान्यं तावल्लक्षयति लिङ्गलिङ्गिपूर्व्वकमिति लिङ्गं व्याप्यं लिङ्गि व्यापकं, शङ्कितसमारोपितोपाधि (१) निराकरणेन वस्तुस्वभावप्रतिबद्धं (२) व्याप्यं, येन च प्रतिबद्धं तद् व्यापकम्। लिङ्गलिङ्गिग्रहणेन च विषयवाचिना विषयिणं प्रत्ययमुपलक्षयति धूमादिर्व्याप्योवह्निर्व्यापक इति यः प्रत्ययस्तत्पूर्व्वकम्! लिङ्गिग्रहणञ्चावर्त्तनीयं तेन लिङ्गमस्यास्तीति पक्षधर्म्मताज्ञानमपि दर्शितं भवति। तद् व्याप्यव्यापकभावपक्ष-

---

अयं जन ईदृशज्ञानवान् एतदृशाभिप्रायवत्त्वादित्यनुमानेन परपुरुषीयं ज्ञानादिकमध्यवसातुं शक्यमित्यर्थः।

(१) साध्यव्यापकत्वे सति साधनाव्यापकत्वमुपाधित्वं, सति चोपाधौ अवश्यमेव हेतुर्व्यभिचारीति सम्भाव्यते। तथाहि धूमवान् वह्नेरित्यादौ आर्द्रेन्धनादिकमुपाधिस्तस्य धूमरूपसाध्यव्यापकत्वेऽपि वह्निरूपसाधनाव्यापकत्वात् तप्तायःपिण्डे साध्येन धूमेन सह सामानाधिकरण्याभावात्। एवञ्च साधनाव्यापकस्य साधनाभावव्यापकतानियमेन तस्य चोपाधेः साध्यव्यापकत्वाभावेन व्यभिचारसमुन्नायकता। अस्य च सत्तया न व्यभिचारसमुन्नायकता अपि तु ज्ञानेनेत्यत उक्तं शङ्कितेत्यादि।

(२) वस्तुस्वभावप्रतिबद्धं नैसर्गिकस्वरूपेण सम्बद्धमिति वस्तुन एव स्वाभाविकःकश्चित् धर्म्मः व्याप्यता। अभावस्याधिकरणस्वरूपत्वेऽपि यथा आधेयादेरधिकरणतानिरूपकत्वादिकल्पना एवं तादृशस्वाभाविकधर्म्मस्यापि निरूपकत्वाद्यो धर्म्मा व्यापके कल्प्यन्ते।

धर्म्मताज्ञानपूर्व्वकमनुमानमिति अनुमानसामान्यं लक्षितम् । अनुमानविशेषान् तन्त्रान्तरे, (१)लक्षितान् स्मारयति त्रिविध-मनुमानमाख्यातं तदिति तत् सामान्यतो लक्षितमनुमानं विशेषतस्त्रिविधम् "पूर्व्ववत्, शेषवत्, सामान्यतोदृष्टञ्च" ! तत्र प्रथमं तावत् द्विविधं वीतमवीतञ्च (२) अन्वयमुखेन प्रवर्त्तमानं विधायकं वीतम्। (३)व्यतिरेकमुखेन प्रवर्त्तमानं निषेधकमवीतम्(४) । तत्रावीतम् शेषवत् शिष्यते परिशिष्यते इति शेषः सएव विषयतया यस्यास्त्यनुमानज्ञानस्य तच्छे-

---

(१) तन्त्रान्तरे गौतमीयन्यायसूत्रे पूर्व्ववदित्यादि पठितम् ।

(२) वीतं विशेषेण इतं सङ्गतमन्वितम् अन्वयव्याप्तिहेतुकमित्यर्थः यद्वा विशेषेण इतं ज्ञातं प्रसिद्धसाध्यव्याप्तिकमित्यर्थः तद्भिन्नमवीतम् व्यतिरेकव्याप्तिहेतुकम् अप्रसिद्धसाध्यव्याप्तिकं वेत्यर्थः व्याप्तेरेव सामान्यविशेषाभ्यां वीतानुमानस्य द्वैविध्यमित्यग्रे वक्ष्यते ।

(३) अन्वयमुखेन तत्सत्त्वे तत्सत्त्वरूपान्वयमुखेन साध्यसामानाधिकरण्यरूपान्वयद्वारेत्यर्थः विधायकं-यो यो धूमवान् स वह्निमानित्यन्वयमुखेन वह्नेः साधकम् ।

(४) व्यतिरेकमुखेन तदसत्त्वे तदसत्त्वरूपव्यतिरेकद्वारा साध्याभावव्यापकीभूताभावप्रतियोगित्वरूपव्यतिरेकव्याप्तिद्वारेत्यर्थः निषेधकं यो यो गन्धाभाववान् स पृथिवीभेदवानिति व्यतिरेकग्रहणेन व्यापकस्य गन्धाभावस्य पृथिव्यां निवृत्त्या पृथिवीभेदरूपस्य गन्धाभावव्याप्यस्य निवारकम् । तथाच पृथिवी पृथिवीतरभिन्ना गन्धवत्त्वादित्यनुमानम् वीतं शेषमग्रेऽभिधास्यते ।

षवत्। यदाहुः प्रसक्तप्रतिषेधेऽन्यत्राप्रसङ्गाच्छिष्यमाणे सम्प्रत्ययः परिशेष, (१) इति। अस्य चावीतस्य व्यतिरेकिण उदाहरणमग्रेऽभिधास्यते (२)। वीतञ्च द्वेधा पूर्व्ववत्, सामान्यतोदृष्टञ्च। तत्रैकं दृष्टस्वलक्षणसामान्य- (३) विषयं यत्, तत् पूर्ववत्, पूर्वं प्रसिद्धं दृष्टस्वलक्षणसामान्यमिति यावत् तदस्य विषयत्वेनास्त्यनुमानज्ञानस्येति पूर्ववत् यथा

---

(१) प्रसक्तं हि प्रतिषिध्यते इति न्यायेन प्रसक्तस्यैव प्रतिषेधोऽभ्युपगम्यते प्रसक्तञ्च गन्धवत्त्वं पृथिव्यामिव जलादिष्वपि न तु गुणादिषु। तथा हि द्रव्यं गुणवत् द्रव्यत्वादित्यनुमानेन द्रव्यमात्रस्यैव गुणवत्तासिद्धेः गुणवत्त्वसामान्याच्च जलादिषु संयोगादिवत् गन्धवत्त्वमपि प्रसक्तमिति तत्र पृथिवीभिन्नेषु जलादिषु प्रसक्तस्य गन्धवत्त्वस्य प्रतिषेधेन स्वाभावस्य गन्धाभावस्य व्याप्यस्य जलत्वादेरिव पृथिवीभेदस्यापि सत्त्वेन तद्व्यापकस्य गन्धाभावस्य तत्र सत्त्वेन च विरोधिनोर्भावाभावयोरेकत्र स्थितेरयोग्यतया गन्धवत्त्वस्य तत्र निवारणम्। अन्यत्र गुणादिषु तु अप्रसङ्गात् निषेधाऽभावेऽपि स्वतएवाभावात् शिष्यमाणे प्रसक्ताधिकरणभिन्ने पृथिवीरूपद्रव्ये, संप्रतीयते इति संप्रत्ययः प्रतीयमानः गन्धवत्त्वरूपपदार्थः परिशेष इत्यर्थः। एवञ्च इयं पृथिवीतरभिन्ना गन्धवत्त्वादित्यनुमानमेव शेषवदित्यस्योदाहरणम् अत्र च साध्यसाधनयोरन्वयव्याप्तेरभावेनावीतरूपतेत्यग्रे स्फुटीभविष्यति।

(२) "सामान्यतस्तु दृष्टादुभयसिद्धि"रितिकारिकाव्याख्यानसमये।

(३) दृष्टं व्यापकतया ज्ञातं स्वलक्षणम् इतरव्यावृत्तम् असाधरणधर्म्म इति यावत् सामान्यमनुगतरूपधर्म्मविशेषो यस्य तद्विषयं पूर्व्ववत्।

धूमाद्वह्नित्वसामान्यविशेषः (१) पर्व्वतेऽनुमीयते तस्य च वह्नित्वसामान्यविशेषस्य स्वलक्षणो (२) वह्निविशेषो दृष्टो रसवत्याम्। अपरञ्च वीतं सामान्यतोदृष्टम् अदृष्टस्वलक्षण-सामान्यविषयं यथेन्द्रियविषयमनुमानम् (३) अत्र हि रूपादिज्ञानानां क्रियात्वेन करणवत्त्वमनुमीयते। यद्यपि करणत्वसामान्यस्य (४) छिदादौ वास्यादि स्वलक्षणमुपलब्धं तथापि यज्जातीयस्य रूपादिज्ञाने करणवत्त्वमनुमीयते तज्जातीयस्य करणस्य न दृष्टं स्वलक्षणं प्रत्यक्षेण, इन्द्रिय-जातीयं हि तत् करणं, नचेन्द्रियत्वस्य सामान्यस्य स्वलक्षण (५) मिन्द्रियविशेषः प्रत्यक्षगोचरोऽर्व्वाग्दृशां यथा वह्नि-त्वसामान्यस्य स्वलक्षणं वह्निः। सोऽयं पूर्व्ववतः सामान्यतोदृ-

(१) वह्नित्वरूपसामान्यविशेषः स्वेतरव्यावृत्तलक्षणो धर्म्मो यस्य तादृशस्य पर्व्वतीयवह्निरेव न द्रव्यत्वादिमानित्यर्थः।

(२) वह्नित्वसामान्यविशेषस्य वह्नित्वरूपविशेषवतः स्वलक्षणः स्वस्य तादृशवह्नित्वाश्रयस्य लक्षणम् इतरव्यावृत्तधर्म्म इव लक्षणं यस्य तादृशो वह्निविशेषो रसवत्यां पाकशालायां दृष्ट इति दृष्टस्वलक्षणसामान्यविषयत्व-मनुमानस्य।

(३) रूपादिज्ञानं करणवत् क्रियात्वात् छिदादिवदित्यनुमानम्।

(४) करणत्वं सामान्यमनुगतधर्म्मो यस्य तस्य, स्वलक्षणं स्वस्य लक्षणमिव लक्षणं यस्येति विग्रहः स्वलक्षणमितरव्यावृत्तधर्म्मवत् वास्यादि दृष्टमिति दृष्ट-स्वलक्षणसामान्यविषयत्वेन पूर्व्ववतोऽभेदापत्तिरित्याशङ्कार्थः।

(५) स्वलक्षणमिति प्राग्वत् इतरव्यावृत्तधर्म्मवत् सामान्यत्वात् नपुंसकम्।

ष्टात् सत्यपि वीतत्वेन तुल्यत्वे विशेषः। अत्र च दृष्टं दर्शनं(१) सामान्यत इति सामान्यस्य, सार्वविभक्तिकस्तसिल्। अदृष्टस्वलक्षणसामान्यविशेषस्य (२) दर्शनं सामान्यतोदृष्टमनुमानमित्यर्थः। सर्वञ्चैतदस्माभिर्न्यायवार्त्तिकतात्पर्यटीकायां व्युत्पादितं नेहोक्तं विस्तरभयादिति।

प्रयोजक (३) वृद्धशब्दश्रवणसमनन्तरम् प्रयोज्यवृद्धप्रवृत्ति-

---

(१) पूर्ववत् इत्यत्र मतुपा पूर्वविषयकत्वबोधनेऽपि सामान्यतोदृष्टमित्यत्र मतुपोऽभावात् कथं तद्विषयकत्वलाभइत्याशङ्क्य दृष्टशब्दस्य भावक्तान्ततया दर्शनपरत्वकल्पनया ज्ञानपरत्वलाभ इत्याह दृष्टं दर्शनमिति।

(२) स्वस्य सामान्यविशेषस्य लक्षणं व्यावर्त्तकधर्म्मोऽसाधारणधर्म्म इति यावत् न दृष्टं स्वलक्षणं यस्य सामान्यविशेषस्य स अदृष्टस्वलक्षणस्ततः कर्म्मधारयस्तस्य दर्शनं ज्ञानम्। प्रत्यक्षे इन्द्रियजन्यबुद्धिवृत्तिरिव परामर्शादिजन्यो बुद्धिवृत्तिविशेष एवानुमितिकरणत्वेन प्रमाणम् अनुमितिस्तु पौरुषेयो बोधः फलं, यद्बलात् पुरुषःपश्यामीतिवत् अनुमिनोमीत्यादि व्यवहरति। तेन प्रमितिकरणलक्षणस्य विभागप्रकरणे अनुमित्यादिविभागो नासङ्गत इति द्रष्टव्यम्। भाष्यकृतस्तु कारणलिङ्गकानुमानं विलक्षणमेघोन्नत्या वृष्ट्यनुमानं पूर्ववत्, कार्यलिङ्गकानुमानं नदीवृद्धिदर्शनात् वृष्ट्यनुमानं शेषवत्, छिदिक्रियायां वास्यादेःकरणत्वं गृहीत्वा तत्सामान्यात् रूपादिज्ञानेऽपि यत् सकरणत्वमनुमीयते तत् सामान्यतोदृष्टमित्याहुः।

(३) अनुमाननिरूपणानन्तरं शब्दनिरूपणे सङ्गतिं दर्शयति प्रयोजकेत्यादि। अयमर्थः शब्दार्थसम्बन्धरूपशक्तिज्ञानमन्तरेण श्रुतशब्दान्नार्थप्रतीतिरित्यतः शब्दार्थयोः संबन्धज्ञानमावश्यकं तज्ज्ञानञ्च प्रथमतो व्यवहार-

हेतुज्ञानानुमानपूर्व्वकत्वाच्छब्दार्थसम्बन्धग्रहणस्य, स्वार्थसम्बन्धज्ञानसहकारिणश्च शब्दस्यार्थप्रत्यायकत्वादनुमानपूर्व्वकत्वमित्यनुमानानन्तरं शब्दं लक्षयति आप्तश्रुतिराप्तवचन(१)न्त्विति तत्राप्तवचनमिति लक्ष्यनिर्द्देशः परिशिष्टं लक्षणम् आप्ता प्राप्ता युक्तेति यावत् आप्ता चासौ श्रुतिश्चेति आप्तश्रुतिः (२) श्रुतिर्वाक्यजनितं वाक्यार्थज्ञानं

दर्शनादेव भवति। तथाहि वृद्धपुरुषेण प्रयोज्यं मध्यमपुरुषं प्रति गामानयेत्यभिहिते तच्छब्दश्रवणानन्तरमेव स तत्र प्रवर्त्तते तथा प्रवर्त्तमानञ्च तं दृष्ट्वा व्युत्पित्सुर्लोकः अस्य चेष्टा प्रवृत्त्यधीना चेष्टात्वात् मदीयचेष्टावदिति चेष्टाहेतुना प्रवृत्तिमनुमाय अस्य प्रवृत्तिः इष्टसाधनताज्ञानाधीना प्रवृत्तित्वात् मदीयपाकादिप्रवृत्तिवदिति प्रवृत्तिरूपकार्य्यलिङ्गेन तद्धेतुभूतमिष्टसाधनताज्ञानं तस्मिन् पुरुषेऽनुमिनोति। तदानीञ्चान्यस्य इष्टसाधनतादिज्ञानसाधनस्यानुपस्थितेः तद्वाक्यस्य च उपस्थितेस्तच्छ्रवणस्यैव तद्धेतुत्वं कल्पयति तत् कल्पयता च तेन तद्वाक्यस्य तादृशार्थसंबन्धित्वमवगम्यते इत्येवंप्रकारेण प्रायः सर्व्वेषां शब्दानां तत्तदर्थसम्बन्धित्वज्ञानं व्यवहारदर्शनादेव भवतीत्यतोऽनुमानमेव शब्दसम्बन्धज्ञाने हेतुरित्यतः तत्प्रयोज्यार्थबोधनप्रयोजकरूपैककार्य्यत्वसङ्गत्या अनुमाननिरूपणानन्तरं शब्दनिरूपणमिति।

(१) आप्तवचनमिति आप्तस्य वचनमाप्तवचनम् आप्तस्य भ्रमप्रमादादिदोषशून्यः "स्वकर्म्मण्यभियुक्तो यो रागद्वेषविवर्ज्जितः। पूजितस्तद्विधैर्न्नित्यमाप्तो ज्ञेयः स तादृश" इत्युक्तलक्षणः, अथवा ,'आगमो ह्याप्तवचनं रागद्वेषक्षयाद्विदु" रित्युक्तेरागमो वेदादिरेवाप्तवचनम्।

(२) आप्ता युक्ता योग्यतादिमती श्रुतिः शब्दबोधः "आत्मा वा अरे द्रष्टव्यः श्रोतव्य" इत्यादौ श्रुधातोः शाब्दबोधार्थकतोपलब्धेस्तदेवाह वाक्यजनितमित्यादि। इन्द्रियजन्यबुद्धिवृत्तेरिव शब्दजन्यबुद्धेरेव स्वमते

तत्र (१) स्वतःप्रमाणम् अपौरुषेयवेदवाक्यजनितत्वेन

---

प्रमाकरणत्वात् प्रमाणम् फलं तु पौरुषेयो बोधः प्रमा, येन शाब्दयामीत्यनुभवः। "आयुर्वै घृत" मित्यादिवदुपचारादाप्तवचनशाब्दबोधयोः सामानाधिकरण्यमिति नायोग्यता।

(१) तत्र वाक्यजनितं वाक्यार्थज्ञानञ्च स्वतःप्रमाणं स्वग्राहकसामग्रीग्राह्यप्रामाण्यकम्। तथाहि। स्वस्वसामग्रीभ्यो जायमानं ज्ञानं स्वविषयघटादिमिव स्वात्मानमप्येकदैव विषयीकरोति तथा च अयं घट इति घटज्ञानं, घटमहं जानामीति च घटज्ञानविषयकमात्मधर्मिकमपि ज्ञानमेकदैव भवतीत्यङ्गीकार्य्यम् अन्यथा घटज्ञाने जाते तदुत्तरमनुव्यवसायइव घटज्ञानाभावरूपविपर्य्ययज्ञानं घटमहं जानामि न वेति संशयो वा भवितुमर्हति तत्प्रतिबन्धकस्य पूर्व्वमसत्त्वात्। तथा हि, सति हि आत्मधर्मिकघटज्ञानविषयकज्ञाने घटज्ञानाभावगोचरो विपर्य्ययः, संशयो वा नोदेति, न्यायमते च तत्र घटज्ञानमात्रसत्त्वेऽपि तद्विषयकस्यात्मधर्मिकज्ञानस्य पूर्वमसत्त्वेन कथं तत् प्रतिरुध्येत। नचाभावबुद्धौ प्रतियोगिज्ञानसामग्र्या अपि प्रतिबन्धकत्वस्वीकारेण तदानीं घटज्ञानाभावप्रतियोगिनो घटज्ञानविषयज्ञानस्य सामग्र्यास्तत्प्रतियोगिकतात्कालिकसमवायादेः सत्त्वान्न घटाभावग्रह इति वाच्यम् अन्यत्र अभावज्ञाने प्रतियोगिज्ञानसामग्र्याः प्रतिबन्धकत्वकल्पनेऽपि ज्ञानाभावबुद्धौ तथाकल्पने घटाभावप्रत्यक्षस्य घटमहं न जानामीत्यनुभवात्मकस्य कदाप्यनुत्पत्तेः अभावबुद्धौ प्रतियोगिज्ञानस्य हेतुतया घटाभावग्रहे जननीये तत्पूर्वं घटज्ञानरूपप्रतियोगिज्ञानस्यावश्यकत्वात् सति च तस्मिन् तत्प्रतियोगिकतात्कालिकसमवायरूपघटज्ञानसामग्र्याः सत्त्वेन तया प्रतिरुद्धत्वात्। सांख्यादिनये तु घटमहं न जानामीत्यादौ घटविषयकमज्ञानरूपम् अविद्यापदवाच्यं पदार्थान्तरं वेदान्तादिवत् स्वीक्रियते इति न तत्र घटज्ञानस्य हेतुतेति न काचिदनुपपत्तिः। न च सांख्या

सकल (१) दोषाशङ्काविनिर्मुक्तत्वेन युक्तं भवति एवं

---

दिनये घटज्ञानं घटज्ञानप्रकारमात्मधर्मिकं ज्ञानञ्चैकदैव भवतीति यदुच्यते तन्न सङ्गच्छते घटमहं जानामीत्यनुभवात्मकबुद्धेर्विशिष्टवैशिष्ट्यावगाहितया तत्र च विशेषणतावच्छेदकप्रकारकविशेषणज्ञानस्य हेतुतया तस्य पूर्वं सत्त्वमावश्यकं तस्य च प्रकृतेऽसत्त्वादिति वाच्यं विशिष्टवैशिष्ट्यावगाहिज्ञानं प्रति विशेषणतावच्छेदकप्रकारकविशेषणज्ञानस्यान्यत्र हेतुत्वेऽपि ज्ञानविशिष्टवैशिष्ट्यावगाहिज्ञानस्थले नैयायिकैरपि तस्य त्याज्यत्वात् अन्यथा तन्मतेऽपि अनुव्यवसायात् पूर्वं व्यवसायरूपघटज्ञानसत्त्वेऽपि घटविषयकत्वप्रकारकज्ञान विशेष्यकज्ञानरूपस्य विशेषणतावच्छेदकप्रकारकविशेषणज्ञानस्यासत्त्वे न कथङ्कारं व्यवसायात् परमेवानुव्यवसायः स्यात्। वस्तुतः विशिष्टबुद्धौ विशेषणज्ञानमिव विशिष्टवैशिष्ट्यज्ञाने विशेषणतावच्छेदकज्ञानमिव हेतुस्तच्च सांख्यादिमतेऽपि सम्भवति निर्विकल्पकस्थानीयस्यालोचनात्मकस्य घटज्ञानस्य व्यवसायात्मकज्ञानात् पूर्वं सत्त्वात् ततश्च विशिष्टवैशिष्ट्यावगाहिज्ञानं सम्भव इत्यास्तां विस्तरः। एवञ्च घटादिज्ञाने यथा स्वविषयकत्वं तथा तद्गतप्रामाण्य विषयकत्वमपि सेत्स्यति तथाच ज्ञानग्राहिकया सामग्र्यैव तद्गतं प्रामाण्यमपि असति प्रतिबन्धके ग्राहयिष्यते। प्रामाण्यञ्च तद्वति तत्प्रकारकत्वमिति ज्ञानस्य सर्वत्र स्वतःप्रामाण्यकत्वे स्थिते वाक्यजनितज्ञानमपि ज्ञानत्वसाम्यात् तथैव भविष्यतीति भावः।

(१) ननु स्वगतप्रामाण्यं प्रमात्मकज्ञानेनैव गृह्यते न तु भ्रमात्मकेनापि तथा च भ्रमात्मकज्ञाने धर्म्मिणि प्रामाण्यज्ञाने भ्रमहेतुभूतदोषस्यैव प्रतिबन्धकतायाः कल्पनीयतया वाक्यजनितज्ञानेऽपि कदाचित् दोषादिना प्रतिबन्धेन न प्रामाण्यग्रहः स्यादित्याशङ्क्य प्रकृतवाक्यजनितज्ञानस्य वेदाधीनतया वेदस्य चापौरुषेयतया दोषादिराहित्येन तज्जनितज्ञाने दोषहेतोरभावात् न प्रामाण्यज्ञाने प्रतिबन्धकत्वमित्याह सकलदोषेत्यादि। भ्रमप्रमादादिदोषो

वेदमूल (१) स्मृतीतिहासपुराणवाक्यजनितमपि ज्ञानं युक्तम् आदिविदुषश्च कपिलस्य कल्पादौ कल्पान्तराधीतश्रुतिस्मरण सम्भवः सुप्तबुद्धस्येव पूर्व्वेद्युरवगतानामर्थानामपरेद्युः। तथा चावट्यजैगीषव्यसंवादे भगवान् जैगीषव्यो दशमहाकल्पवर्त्तिजन्मस्मरणमात्मन उवाच "दशसु महाकल्पेषु विपरिवर्त्तमानेन मये" त्यादिना ग्रन्थसन्दर्भेण। आप्तग्रहणेन चायुक्ताः शाक्य (२) भिक्षुनिर्ग्रन्थकसंसारमोचकादीनामागमाभासा निराकृताःभवन्ति। अयुक्तत्वञ्चैतेषां विगानात् छिन्नमूलत्वात् प्रमाणविरुद्धार्थाभिधानात् कैश्चिदेव च म्लेच्छादिभिः पुरुषापसदैः पशुप्रायैः परिग्रहाद्बोध्यम्। तुशब्देना (३) नुमानाद्व्यवच्छिनत्ति

---

हि पुरुषधर्म्मः पुरुषवचने च तत्सत्त्वेऽपि अपौरुषेये वेदे तस्याभावात् न प्रतिबन्धकसम्भवः। युक्तत्वं बाधराहित्यं तत्र हेतुः दोषादिनिर्मुक्तत्वं तत्रापि हेतुरपौरुषेयवेदजनितत्वमित्युत्तरोत्तरहेतुत्वकथनाय तथा निर्द्देशः।

(१) ननु वेदवाक्यजनितज्ञानस्य प्रामाण्येऽपि स्मृत्यादिकर्त्तृमुन्यादिवाक्यजनितज्ञानस्य कथं प्रामाण्यमित्याशङ्क्य तेषामपि वेदसमानार्थकवाक्यप्रयोक्तृत्वात् तद्वाक्येन च मूलीभूतमागमवाक्यमनुमाय तत्प्रामाण्यमभ्युपेयमित्याह वेदमूलेत्यादि।

(२) शाक्यादयो बौद्धभेदाः निर्ग्रन्थकाः मुक्तकच्छा विवसना दिगम्बरा आर्हता इत्यर्थः।

(३) शब्दश्रवणादनन्तरं वाक्यार्थबोधः सार्व्वजनानुभविकः स च बोधः अनुमित्यात्मक एवेति काणादाः, भिन्न एवेति नैयायिकादयः। तत्र अनुमि-

वाक्यार्थो (१) हि प्रमेयो न तु तद्धर्म्मो वाक्यं येन तत्र लिङ्गं भवेत्। न च वाक्यं वाक्यार्थं (२) बोधयत्सम्बन्धग्रहणमपेक्षते अभिनव (३) कविविरचितस्य वाक्यस्यादृष्टपूर्वाननुभूतचर-वाक्यार्थबोधकत्वादिति।

---

तिभिन्नत्वं व्यवस्थापयति तुशब्देनेत्यादिना। अयमर्थः वाक्यज्ञानाधीनो वाक्यार्थबोधो नानुमित्यात्मकः, अनुमितिहेतुभूतस्य लिङ्गपरामर्शादिकारणस्याभावेऽपि तदुदयादिति।

(१) ननु वाक्यस्यैव लिङ्गत्वसम्भवेन तद्धेतुकं वाक्यार्थज्ञानमनुमित्यात्मकमेव भविष्यतीत्याशङ्क्य वाक्यस्य अतद्धर्म्मत्वेन तल्लिङ्गत्वं निरस्यति वाक्यार्थो हीत्यादि। अयमाशयः यदि वाक्यं शब्दार्थस्य धर्म्मः स्यात् स्याच्च धर्म्मस्य धर्मिणोऽविनाभावात् तल्लिङ्गपरामर्शादिनाऽनुमानम् न च तथेति।

(२) ननु धर्म्मत्वं लिङ्गत्वे न तन्त्रं विलक्षणमेघोन्नत्यादेर्वृष्टेरधर्मत्वेऽपि तल्लिङ्गत्वदर्शनात् किन्तु तद्ग्राहकत्वमेव तल्लिङ्गत्वे हेतुरित्युपेयमित्याशङ्क्य बोधहेतुत्वस्य तल्लिङ्गत्वतन्त्रत्वे चक्षुरादीनामपि विषयलिङ्गत्वापत्तिः किन्तु तद्व्याप्यत्वमेव तल्लिङ्गत्वे तन्त्रं,प्रकृते च तन्नास्तीत्याह व्याक्यार्थं बोधयदपीति। संबन्धग्रहणं व्याप्तिरूपसम्बन्धज्ञानं पक्षधर्मताज्ञानं वा यथाश्रुतसम्बन्धज्ञानपरत्वे वाक्यार्थबोधे शब्दार्थसम्बन्धरूपशक्तिज्ञानस्यापेक्षिततया व्याघातापत्तेः। एवञ्च वाक्यधर्मिकव्याप्तिज्ञानाभावेऽपि शाब्दबोधस्योदयात् न तदपेक्षानियम इति भावः।

(३) ननु वाक्यश्रवणस्य हेतोरुभयसम्मततया तद्धर्मिकव्याप्तिज्ञानमात्रमधिकं कल्प्यते कल्पिते च तस्मिन् आदौ वाक्य श्रवणम्,अनन्तरं वाक्यधर्मिकार्थव्याप्तिज्ञानादिस्ततो बोध इति क्षणद्वयादिविलम्बे का क्षतिरित्याशङ्क्य प्रसिद्धे हेतौ एव व्याप्तिर्ग्राह्या नाप्रसिद्धे, साध्यस्याप्रसिद्धस्यापि क्वचित्साधनसम्भवेऽपि साधनाप्रसिद्धौ अनुमितेः क्वाप्यदर्शनात् तथा च अभिनवकाव्ये-

एवं प्रमाणसामान्यलक्षणेषु तद्विशेषलक्षणेषु च सत्सु यानि प्रमाणान्तराण्युपमानादीन्यभ्युपेयन्ते प्रतिवादिभिस्तान्युक्तलक्षणेषु प्रमाणेषु अन्तर्भवन्ति। तथाहि उपमानं(१)तावत् यथागौस्तथा गवय इति वाक्यं तज्जनिता धीरागमएव(२)। योऽप्ययं(३) गवयशब्दो गोसदृशस्य वाचकइतिप्रत्ययः सोऽप्यनुमानमेव, यो हि

---

कदाप्यश्रुते च कथङ्कारमभिनववाक्यार्थव्याप्तिग्रहः सम्भवतीत्याह अभिनवेत्यादि। सिद्धान्ते तु तत्रादाववान्तरपदजन्यपदार्थस्मृतिः पश्चात् विशिष्टबोधः।

(१) कोषादौ श्रुतस्य गवयशब्दस्यार्थं बुभुत्सुं प्रति यत् आप्तस्य गोसदृशो गवयइत्युपदेशवाक्यं तदेव उपमितौ करणमित्युपमानप्रामाण्यवादिभिर्नैयायिकादिभिरङ्गीक्रियते। तद्बुभुत्सुना च तद्वाक्यं श्रुत्वा गोसदृशपदार्थः गवयशब्दार्थ इति वाक्यार्थोऽवसीयते। पश्चाच्च तेनैव कदाचित् वनगमनादिना गोसदृशे अदृष्टचरे पशुविशेषे दृष्टे तदुद्बोधेन आप्तोपदेशवाक्यं स्मर्यते। स्मृतेन च तेन वाक्येन तदर्थानुस्मृतिद्वारा दृष्टे अदृष्टचर पिण्डे गोसदृशे गवयपदवाच्यताऽवसीयते इति तद्वाच्यतावगमएव उपमितिरिति तत्प्रमाणञ्च उपदेशवाक्यमिति स्थिते स्मृतवाक्यजनितायाः बुद्धेः शाब्दबोधत्वौचित्येन क्लृप्तप्रमाणभावेनैव शब्देन तदुपपत्तौ नोपमानस्य प्रमाणान्तरत्वमित्याह उपमानं तावदित्यादि।

(२) आगम आगमजन्यबोधः शाब्दबोध इत्यर्थः तेन न धिया सह सामानाधिकरण्यानुपपत्तिः। स्मृतेनोपदेशवाक्येन जनितायाः बुद्धेः शाब्दत्वौचित्यात्तथाकल्पनमिति भावः।

(३) ननु श्रुतात् स्मृताद्वोपदेशवाक्यात् गोसदृशे गवयशब्दवाच्यतावगमेऽपि शाब्दबुद्धौ शब्दोपस्थितानामेव भाननियमेन गवयशब्दादेश्च शब्देनानुपस्थितेः गवयशब्दस्य गोसदृशवाचकतायाः अनवगमात् तदर्थमेव उपमानस्य प्रमाणान्तरतेत्याशङ्क्य अनुमानेनैव तत्सिद्धिं समर्थयते योऽप्ययमित्यादि।

शब्दो यत्र वृद्धैः प्रयुज्यते सोऽसति वृत्त्यन्तरे तस्य वाचको गोशब्दो गोत्वे यथा, प्रयुज्यते चैवं गवयशब्दो गोसदृशे इति तस्यैव वाचक इति ज्ञानमनुमानमेव। यत्तु गवयस्य चक्षुः-सन्निकृष्टस्य गोसादृश्यज्ञानं तत् (१) प्रत्यक्षम्। अतएव स्मर्य्यमाणायां गवि (२) गवयसादृश्यज्ञानं प्रत्यक्षम् नत्वन्यत् (३)

---

गवयशब्दः गोसदृशवाचकः वृद्धैस्तत्रार्थे प्रयुज्यमानत्वात् यः शब्दोवृद्धैर्यत्रार्थे प्रयुज्यते स तदर्थवाचकः गोत्वविशिष्टे प्रयुक्तगोशब्दवदित्यनुमानमेव स प्रत्यय इति भावः।

(१) उपदेशमन्तरेणापि इन्द्रियसन्निकृष्टे गवये यत् गोसादृश्यज्ञानं तदेव उपमितिरिति मतं यत्त्वित्यादिनाशङ्क्य समाधत्ते तदिति। अयमर्थः गवये चक्षुःसन्निकर्षे गवयगतं लोमलाङ्गूलाद्यपि चक्षुःसन्निकृष्टमेव सति च तत्र चक्षुःसन्निकर्षे गवयगतरूपादेरिव तस्यापि तदानीं प्रत्यक्षसम्भवात् न तदर्थं प्रमाणान्तरकल्पनावश्यकता। न च लोमलाङ्गूलादिप्रत्यक्षेऽपि गोसदृशलोमलाङ्गूलादिप्रत्यक्षार्थं तदावश्यकमिति वाच्यम् इदं रजतमित्यादौ रजतत्वांशे स्मरणवत् गोसादृश्यांशे स्मरणसंभवेन तदंशे सुरभि चन्दनमित्यादिवदलौकिकत्वस्य स्वीकारे क्षत्यभावात्।

(२) स्मर्य्यमाणायां गवि गवयसादृश्यज्ञानमित्युक्तिर्नोपमानस्य फलकथनार्थं प्रसिद्धस्यैवोपमानत्वनियमेन संयोगस्य द्विष्ठत्वेऽपि अनुयोगिन्याधारताप्रतीतिवत् सादृश्यस्योभयनिष्ठत्वेऽपि अनुयोगिन्येव सादृश्यप्रतीतेस्तस्यैवोपमेयत्वनियमेन च गवये एव गोसादृश्यज्ञानस्यैव फलत्वौचित्यात् किन्तु धर्म्मिणोऽसन्निकर्षस्थले स्मरणादिना उपनीतस्य तस्य यथा भानमेवं धर्म्मस्यापि गोगतलाङ्गूलादेरसन्निकर्षेऽपि स्मरणादिना उपनीतस्य भानं शक्यसंपादमित्येव दर्शयितुमिति द्रष्टव्यम्।

(३) ननु गोसादृश्यं यदि क्वचिदनुभूतं तदा स्मर्य्येत अनुभूतन्तु गोगतलोमलाङ्गूलादिकमिति कुतस्तत्सादृश्यस्मरणमित्याशङ्क्य साधारणस्य

गवि सादृश्यमन्यच्च गवये, भूयोऽवयवसामान्ययोगो हि जात्यन्तरवर्त्ती (१) जात्यन्तरे सादृश्यमुच्यते सामान्ययोगस्त्वेकः स चेद्गवये प्रत्यक्षो गव्यपि तथेति नोपमानस्य प्रमेयान्तरमस्ति यत्र प्रमाणमुपमानं भवेदिति न प्रमाणान्तरमुपमानम्।

एवमर्थापत्तिरपि न प्रमाणान्तरं तथाहि जीवतश्चैत्रस्य गृहाभावदर्शनेन वहिर्भावस्यादृष्टस्य कल्पनमर्थापत्तिरभिमता वृद्धानां साप्यनुमानमेव। यदा खलु व्यापकः (२) सन्नेकत्र नास्ति तदान्यत्रास्ति यदा व्यापकएकत्रास्ति तदान्यत्र नास्तीति सुकरःस्वशरीरे एव व्याप्तिग्रहः। तथाच सतो गृहाभावदर्शनेन लिङ्गेन वहिर्भावदर्शनमनुमानमेव। न च चैत्रस्य (३) क्वचित्सत्त्वेन गृहाभावः

भूयोऽवयवयोगस्यैव सादृश्यपदार्थतया गोगतलोमलाङ्गूलादिज्ञानेनैव तज्ज्ञाननिष्पत्तिरित्याह नह्यन्यदित्यादिना।

(१) भूयोऽवयवयोगमात्रस्य सादृश्यपदार्थत्वे गोसदृशो गौरित्यपि स्यादित्याशङ्क्य तद्भिन्नत्वे सतीति निवेशनीयत्वात् न तथात्वापत्तिरित्याह जात्यन्तरवर्त्तीत्यादि तथाच स्वभेदसमानाधिकरणसाधारणानेकधर्म्म योगः सादृश्यमिति फलितम्।

(२) व्यापकस्य देशविशेषेऽस्थितावपि देशान्तरे सत्त्वमवगम्यते इत्याह व्यापकः सन्नित्यादि सन् सत्त्वाश्रयः, व्यापकः सत्त्वव्यापकः, तथाच सन् चैत्रो वहिरस्ति गृहेऽसत्त्वात् गृहेऽस्थितस्वशरीरवदित्यनुमानादेवार्थापत्तिविषयसिद्धिरिति भावः।

(३) सत्त्वाश्रयस्य सतः पक्षीकरणात् सत्त्वासत्त्वयोश्च विरोधितया

शक्योऽपह्नोतुं येनासिद्धोगृहाभावोवह्निर्भावे न हेतुः स्यात् । न च गृहाभावेन(१) वा सत्त्वमपह्नूयते येन सत्त्वमेवानुपपद्यमानमात्मानं न वहिरवस्थापयेत् तथाहि ( २ ) चैत्रस्य गृहासत्त्वेन सत्त्वमात्रं वा विरुध्यते, गृहसत्त्वं व। न तावद्यत्र क्वचन सत्त्वस्यास्ति विरोधो गृहासत्त्वेन, भिन्नविषयत्वात् । देशसामान्येन (३) गृहविशेषाक्षेपोऽपि पाक्षिक इति सामानविषयकतया विरोध इति चेन्न(४) प्रमाणनिश्चितस्य गृहेऽसत्त्वस्य पाक्षिकतया सांशयिकेन गृहसत्त्वेन प्रतिक्षेपायोगात् ।

---

सत्त्वप्रतिरुद्धः कथं गृहेऽसत्त्वरूपो हेतुस्तिष्ठेत् तथाच स्वरूपासिद्धहेतुना कथं वह्निःसत्त्वरूपसाध्यसिद्धिरिति आशङ्क्य समाधत्ते न च चैत्रस्येत्यादिना। गृहाभावः गृहासत्त्वम्, वह्निर्भावे, वह्निःसत्त्वसाधने ।

( १ ) ननु गृहेऽसत्त्ववतः कथं सत्त्वाश्रयता सत्त्वासत्त्वयोर्विरोधित्वात्तथा चाश्रयासिद्धिरित्याशङ्क्य समाधत्ते न च गृहाभावेनेति गृहासत्त्वेनेत्यर्थः ।

( २ ) गृहासत्त्वस्य गृहसत्त्वं प्रत्येव विरोधिता न तु सत्त्वसामान्यं प्रतीति समर्थयितुं विकल्पयति तथाहि चैत्रस्येति ।

( ३ ) ननु सत्त्वमाश्रयसामान्यमाक्षिपत् देशसामान्यमेवाक्षिपति देशसामान्यमाक्षिपता च तेन तन्मध्यवर्त्तिनोगृहरूपदेशस्यापि समाक्षेपात् गृहस्यापि पाक्षिकसत्त्वलाभेन तेन सह गृहासत्त्वस्य विरोधित्वात् पुनः स्वरूपासिद्धिरित्याशङ्कते देशसामान्येनेति आक्षिप्यमाणेनेत्यादिस्तथाच सामान्यदेशाक्षेपेणैव विशेषदेशस्याप्याक्षेपइति भावः ।

( ४ ) परिहरति नेति पाक्षिकतया । पक्षे प्राप्ततया सांशयिकेन संशयमापन्नेन सामान्यविषयं सत्त्ववाक्यं "गृहविषयं न वेति" संशय मात्रलब्धेनगृहसत्त्वेन प्रतिक्षेपायोगात् तस्य दुर्ब्बलतया प्रतिबन्धकत्वानौचित्यात् ।

नापि प्रमाण(१) निश्चितोऽगृहाभावः पाक्षिकमस्य गृहसत्त्वं प्रतिक्षिपन् सत्त्वमात्रमपि प्रतिक्षेप्तुं, सांशयिकत्वं वापनेतुमर्हतीति युक्तं(२) गृहावच्छिन्नेन चैत्राभावेन गृहसत्त्वं विरुद्धत्वात् प्रतिक्षिप्यते नतु सत्त्वमात्रं तस्य तत्रौदासीन्यात्।

तस्मात् (३) गृहाभावेन लिङ्गेन सिद्धेन सतो वहिर्भावोऽनुमीयत इति युक्तम्। एतेन (४) विरुद्धयोः प्रमाणयोर्विषयव्यवस्थया अविरोधापादनमर्थापत्तेर्विषयइति परास्तम् अवच्छिन्नानवच्छिन्नयो (५) विरोधाभावात्। उदाहरणान्तराणि चार्थापत्तेरेवमेवानुमानेऽन्तर्भावनीयानीति।

---

(१) प्रमाणनिश्चितस्य प्रात्यक्षिकस्य गृहासत्त्वस्य गृहसत्त्वं प्रत्येव प्रतिबन्धकत्वं न तु सत्त्वसामान्यं प्रतीति व्यवस्थापयन्नाह नापि प्रमाणेति। अस्य चैत्रस्य, प्रतिक्षिपन् प्रतिरुन्धन् प्रतिक्षेप्तुं प्रतिरोद्धुमर्हतीत्यग्रेणान्वयः। सांशयिकत्वं संशयमापन्नत्वम् एतस्य च सत्त्वमात्रस्येत्यादिः। अपनेतुमपसारयितुम्।

(२) विषयविशेषे एव विरोधित्वमित्युपसंहरति युक्तमित्यादिना।

(३) एतावता प्रबन्धेन व्यवस्थापितमर्थं निगमयन्नाह तस्मादिति।

(४) गृहासत्त्वप्रमाणं प्रत्यक्षं, सत्त्वसामान्यप्रमाणमनुमानमेतयोर्विषयविशेषे व्यवस्थापनेनाविरोधापादनम् समाधानमित्येवार्थापत्तेः फलं तत् निरस्यति एतेनेति वक्ष्यमाणहेतुनेत्यर्थः परास्तमित्यग्रेणास्यान्वयः।

(५) विरोधाभावे हेतुं वदन् निरसनहेतुं द्योतयति अवच्छिन्नेत्यादि गृहावच्छिन्नसत्त्वं प्रत्यक्षविषयः गृहानवच्छिन्नसत्त्वमनुमानविषय इत्येकविषयत्वाभावेन-विरोधाभावात् विरोधस्यैव तत्रासद्भावात् अर्थापत्त्या किं समाधास्यते इति भावः।

तस्मान्नानुमानात् प्रमाणान्तरमर्थापत्तिरिति सिद्धम् ।

एवमभावोऽपि(१) प्रत्यक्षमेव नहि भूतलस्य परिणामविशेषात् कैवल्यलक्षणात् अन्यो घटाभावो नाम, प्रतिक्षणपरिणामिनो (२) हि सर्वे एव भावाः ऋते चितिशक्तेः । स च परिणामभेद ऐन्द्रियिकइति नास्ति प्रत्यक्षाद्यनवरुद्धो विषयो यत्राभावाख्यं प्रमाणान्तरमभ्युपेयमिति ।

सम्भवस्तु यथा खार्य्यां द्रोणाढकप्रस्थाद्यवगमः स चानुमानमेव

---

(१) मीमांसकैरभावज्ञाने "यद्यत्र घटःस्यात् तदा घटवत्तयेदमुपलभ्येनेत्येवं"रूपायाः योग्यप्रतियोग्यनुपलब्धेः कारणताङ्गीक्रियते तदपाकरोति एवमभावोऽपीति। अयमाशयः अभावोनाम यदि वस्त्वन्तरं स्यात् स्याच्च तदा तदवबोधाय योग्यानुपलब्धेर्हेतुत्वं तदेव नास्ति तस्य अधिकरणकैवल्यरूपत्वात् तथा च भूतलादिदेशप्रत्यक्षसाधने समर्थेहिते भूतलं यदा गृह्यते तदा तद्गतरूपाद्यन्यान्यधर्मइव घटाद्यनुपरक्ततारूपकैवल्यमपि प्रत्यक्षेणैव गृहीष्यते किमभावपदार्थकल्पनया तज्ज्ञानार्थं वा योग्यानुपलब्धिकल्पनया ।

(२) नन्वभावस्य अधिकरणकैवल्यरूपधर्म्मात्मकत्वे प्रतियोगिसत्ताकालेऽपि तत्प्रतीतिः स्यादित्याशङ्क्य प्रतियोगिसत्ताकाले तद्धर्मस्यापायान्न तत्प्रतीतिरित्याशयेन वस्तुनः प्रतिक्षणमन्यान्यरूपपरिणामं साधयति प्रतिक्षणपरिणामिन इति । तथाच चेतनभिन्नाः पदार्थाः प्रतिक्षणविभिन्नपरिणामरूपकार्य्यवन्तः चेतनभिन्नभावत्वात् मेघवत् प्रभावइत्यनुमानादेव तत्सिद्धिः । अभावस्य प्रतियोग्यनुपरक्ततारूप कैवल्यात्मकाधिकरणधर्मत्वाभ्युपगमेऽपि तादृशधर्मे एव प्रतियोगितादीनां निरूपकतादिसम्भवेन भूतले घटो नास्तीत्यादिप्रतीतेर्नापलापापत्तिरित्यधिकरणस्वरूपाभाववादिमतनिष्कर्षः ।

खारीत्वं (१) हि द्रोणाद्यविनाभूतं प्रतीतं खार्य्यां द्रोणादि-सत्त्वमवगमयतीति ।

यच्चानिर्द्दिष्टप्रवक्तृकं प्रवादपारम्पर्य्यमात्रम् "इति होचु-र्वृद्धा" इत्यैतिह्यं यथा इह वटे यक्षः प्रतिवसतीति, न तत् प्रमाणम् अनिर्द्दिष्टप्रवक्तृकत्वेन सांशयिकत्वात् आप्तप्रवक्तृकत्वनिश्चये त्वागम इत्युपपन्नं त्रिविधम् प्रमा-णमिति ॥ ५ ॥

एवन्तावद्व्यक्ताव्यक्तज्ञलक्षणप्रमेयसिद्ध्यर्थं प्रमाणानि लक्षि-तानि । तत्र व्यक्तं पृथिव्यादि, स्वरूपतः घटपटोपललोष्टाद्यात्मना पांशुलपादको हालिकोऽपि (२) प्रत्यक्षतः प्रतिपद्यते, पूर्व्व-वता चानुमानेन धूमादिदर्शनात् वह्न्यादीति तद्व्युत्पादनाय मन्दप्रयोजनं शास्त्रमिति दुरधिगममनेन व्युत्पादनीयम् । तत्र यत् प्रमाणं यत्र समर्थं तद् उक्तलक्षणेभ्यः प्रमाणेभ्यो निष्कृष्य दर्शयति ।

**सामान्यतस्तु दृष्टादतीन्द्रियाणां प्रतीतिरनुमानात् ।**
**तस्मादपि चासिद्धं परोक्षमाप्तागमात् सिद्धम् ॥६॥**

---

(१) खारीत्वं खारीपरिमाणं महापरिमाणे स्वावान्तरपरिमाणसमा वेशोऽनुभवसिद्धः तथा च खारीपरिमाणं द्रोणादिपरिमाणव्यापकमिति व्यापकस्थित्या व्याप्यस्थितेरावश्यकत्वेनानुमानेनैव तस्य गतार्थतेत्यर्थः ।

(२) पांशुलपादकः धूलिधूसरितचरणःहालिकः हलवाही तद्ग्रहणं व्यक्तिमात्रवेद्यताप्रतिपादनार्थम् ।

तुशब्दः प्रत्यक्षपूर्व्ववद्भ्यां विशिनष्टि । सामान्यतोदृष्टादनुमानादध्यवसाया (१) दतीन्द्रियाणां प्रधानपुरुषादीनाम्(२)

---

(१) स्वमते बुद्धिवृत्तिरूपाध्यवसाय एवानुमितिकरणमुक्तं तदनुरोधाद्दाह्याध्यवसायादिति ।

(२) पुरुषादीनामित्यत्रादिपदेन पञ्चतन्मात्रेन्द्रियाहङ्कारमहत्तत्त्वानां ग्रहणम् तत्रानुमानप्रयोगस्त्वेत्थम् स्थूलभूतानि स्वस्वविशेषगुणवद्द्रव्योपादनकानि स्थूलत्वात् घटपटवदिति स्थूलत्वञ्च वाह्येन्द्रियग्राह्यगुणकत्वम् तेन अंशे न स्वरूपासिद्धिः। इत्यनुमानेन पञ्चतन्मात्रसिद्धिः। अत्र कारणगुणक्रमेण कार्य्यगुणोत्पत्तेर्व्वाधकं विना सर्व्वत्र प्रवृत्तिरेवानुकूलतर्कः। "तस्मिंस्तस्मिंश्च तन्मात्रास्तेन तन्मात्रता स्मृता। न शान्ता नापि घोरास्ते न मूढाश्चाविशेषिणः" इति विष्णुपुराणादिना तेषु तेषुभूतेषु शब्दादितन्मात्रास्तिष्ठन्तीत्यतोधर्म्मधर्म्मिप्रभेदाद् द्रव्याण्यपि तन्मात्राण्युक्तानि। एवं स्थूलभूतैः पञ्चतन्मा त्रानुमानम्। ज्ञानं सकरणकं क्रियात्वात् छिदावदित्यनेनेन्द्रियानुमानम्। तन्मात्रेन्द्रियाण्यभिमानवद्द्रव्योपादानकानि अभिमानकार्य्यद्रव्यत्वात् यन्नैवं तन्नैवं यथा पुरुषादि इत्यहङ्कारानुमानम्। अहङ्कारश्चाभिमानवृत्तिकमन्तरकरणं द्रव्यमेव द्रव्यस्यैव द्रव्योपादनकत्वनियमात्। अहङ्कारद्रव्यं निश्चयवृत्तिमद्द्रव्योपादनकं निश्चयवृत्तिकार्य्यद्रव्यत्वात् यन्नैवं तन्नैवं यथा पुरुषादि। सर्वो हि लोकः प्रथमं पदार्थं निश्चित्य पश्चादभिमन्यते "इदं मया कर्त्तव्यमिति" तत्र वृत्त्योर्निश्चयाभिमानयोः कार्य्यकारणभावदर्शनात् तद्विशिष्टयोरपि कार्यकारणभावोऽभ्युपेयते। इत्यहङ्कारेण बुद्धितत्त्वानुमानम्। सुखदुःखमोहधर्म्मिणी बुद्धिः सुखदुःखमोहधर्मकद्रव्योपादनकं कार्य्यत्वे सति सुखदुःखमोहात्मकत्वात् कान्तादिवदित्यनुमाने कारणगुणानुसारेणैव कार्य्यगुणौचित्यमेवानुकूलतर्कः। एवं बुद्धितत्त्वेन प्रकृत्यनुमाम्।

प्रतीतिः प्रतिपत्तिश्चितिच्छायापत्ति (१) र्बुद्धेरध्यवसायः से-त्यर्थः। उपलक्षणञ्चैतत् शेषवत (२) इत्यपि द्रष्टव्यम्। तत् किं सर्व्वेष्वतीन्द्रियेषु सामान्यतोदृष्टमेव प्रवर्त्तते तथाच यत्र तन्नास्ति महदाद्यारम्भक्रमे स्वर्गापूर्व्वदेवतादौ च तेषामभावः प्राप्तइत्यत आह तस्मादपीति तस्मादपीत्येतावतैव सिद्धे चकारेण शेषवतइत्यपि समुच्चितमिति॥ ६॥

स्यादेतत्। यथा गगनकुसुमकूर्म्मरोमशशविषाणादिषु प्रत्यक्षमप्रवर्त्तमानं तदभावमवगमयति एवं प्रधानादिष्वपि, तत् कथं तेषां सामान्यतोदृष्टादिभ्यः सिद्धिरित्यत आह।

---

महदादिकं परार्थं (स्वेतरस्य भोगापवर्गफलकम्) संभूय कारित्वात् स्त्रहा-दिवत्। इति पुरुषानुमानम्। इतरसहकारेणार्थक्रियाकारित्वं संभूयका-रित्वम्। पुरुषस्तु विषयप्रकाशनरूपायां स्वार्थक्रियायां नापरमपेक्षते इति न व्यभिचारः।

(१) अध्यवसायात् प्रतीतिरूपाध्यवसायः कथं स्यादित्याशङ्क्य तयोर्भे-ददर्शनाय प्रतीतेश्चितिच्छायापत्तिरूपत्वमाह चितिच्छायापत्तिरिति तत्ता-दात्म्यापत्तिरित्यर्थः। बुद्धेर्योऽध्यवसायः स इह चितेश्छायापत्तिरैकरूप्यापत्ति रूपप्रतीतिरित्यर्थः।

(२) शेषवत इति, यथा गन्धवत्त्वस्य पृथिवीतरभेदसाधकत्वम् तथा ज्ञानकरणत्वादेरपि इन्द्रियेतरभेदसाधकत्वम् तच्च व्यतिरेकव्याप्त्यैव प्रागुप-दर्शितरीत्यावसेयम्।

**अतिदूरात् सामीप्यादिन्द्रियघातान्मनोऽनवस्थानात्।**
**सौक्ष्म्याद्व्यवधानादभिभवात् समानाभिहाराच्च॥७॥**

अनुपलब्धिरिति वक्ष्यमाणं सिंहावलोकितन्यायेनानुषञ्जनीयम् यथा उत्पतन् वियति पतत्त्री अतिदूरतया सन्नपि प्रत्यक्षेण नोपलभ्यते, सामीप्यादित्यत्राप्यतिरनुवर्त्तनीयः यथा लोचनस्थमञ्जनमतिसामीप्यान्न दृश्यते, इन्द्रियघातोऽन्धत्वबधिरत्वादिः। मनोऽनवस्थानात् यथा कामाद्युपहतमनाःस्फीतालोकमध्यवर्त्तिनमिन्द्रियसन्निकृष्टमप्यर्थं न पश्यति। सौक्ष्म्यात् (१) यथा इन्द्रियसन्निकृष्टं परमाण्वादि प्रणिहितमना अपि न पश्यति। व्यवधानात् कुड्यादिव्यवहितं राजदारादि न पश्यति। अभिभवात् यथा अहनि सौरीभिर्भाभिरभिभूतं ग्रहनक्षत्रमण्डलं न पश्यति। समानाभिहारात् (२) यथा तोयदविमुक्तानुदबिन्दून् जलाशये न पश्यति। चकारोऽनुक्तसमुच्चयार्थः तेनानुद्भवोऽपि संगृहीतः तद्यथा क्षीराद्यवस्थायां दध्याद्यनुद्भवान्न दृश्यते। एतदुक्तम्भवति न हि प्रत्यक्षनिवृत्तिमात्राद्वस्त्वभावो भवति अतिप्रसङ्गात् तथाहि गृहाद्बहिर्निर्गतो

---

(१) सौक्ष्म्यादिति सौक्ष्म्यं निरवयवद्रव्यत्वं तच्च प्रत्यक्षं प्रति प्रतिबन्धकं योगजधर्मश्चोत्तेजकस्तेन योगिनां तत्प्रत्यक्षत्वेऽपि न विरोधः।

(२८) समानाभिहार स्तुल्यरूपव स्तुसंश्लेषेण एकरूप्यापत्तिस्तस्मात्।

मप्रवर्त्तमानमयोग्यत्वान्न प्रवर्त्तत इति कल्प्यते सप्तमस्तु रसो न प्रमाणेनावधारित इति न तत्र प्रत्यक्षयोग्यता शक्याध्यवसातुमिति भावः। किन्तु पुनस्तत् कार्य्यं यतः प्रधानानुमानमित्यत आह महदादि तच्च कार्य्यम्। एतच्च यथा गमकं तथोपरिष्टा (१) दुपपादयिष्यते। तस्य च कार्य्यस्य विवेकज्ञानोपयोगिनी (२) सारूप्यवैरूप्ये (३) आह प्रकृतिसरूपं विरूपञ्च। एते चोपरिष्टाद्विभजनीये इति ॥८॥

कार्य्यात्कारणमात्रं गम्यते। सन्ति चात्र वादिनां विप्रतिपत्तयः। केचिदाहुरसतः (४) सज्जायतइति, एकस्य

(१) भेदानां परिमाणादित्यादिकारिकाव्याख्यानसमये।

(२) कार्य्यकारणयोः सिद्धान्तेऽनन्यत्वात् कथं सारूप्यवैरूप्ये इत्याशङ्क्य सत्यपि तयोरनन्यत्वे व्यवस्थया धर्मविशेषेण कार्य्यव्यवहारः, धर्मविशेषेण च कारणव्यवहारोविवेकज्ञानायेत्याह विवेकज्ञानोपयोगिनी इत्यादि विवेकस्य इतरभेदज्ञानस्य उपयोगिनी उपकारिणी ताभ्यामेव धर्मविशेषाभ्यां कार्य्यकारणयोरभेदेऽपि विलक्षणत्वमनुमीयतेइति भावः।

(३) सारूप्यवैरूप्ये साधर्म्यवैधर्म्ये लक्षणालक्षणे इति यावत् तथाच धर्मविशेषेण प्रकृतितुल्यता धर्मविशेषेण च तद्विलक्षणता।

(४) असतः-सत्त्वेन वक्तुमशक्यात् निरुपाख्यात् अभावात् सत्-भावरूपं वस्तु, जायते जाततया व्यवह्रियते तथाहि अङ्कुरादिकं वीजनाशानन्तरमेव, दध्यादि दुग्धनाशान्तरमेव उत्पद्यमानं दृश्यते अतोऽनुमीयते कार्य्यभावा अभावकारणकाः कार्य्यत्वात् वीजनाशोत्तरजाताङ्कुरादिवत्। यत्रापि च तन्त्वादिषु पटकारणेषु सरूपेण नाशो न दृश्यते तत्राप्यनु-

सतो विवर्त्तः (१) कार्य्यजातं न वस्तु सदित्यपरे। अन्ये तु

---

मानेनैव तज्ज्ञानं जननीयम् युक्तंचैतत् उत्पन्ने पटे यदि तन्तवो न नष्टा-स्तदा तन्तवइमे इतिव्यवहारविषयतामापद्येरन् न च तथा, अतस्तत्र तन्तु-व्यवहाराभावात् पटरूपेण व्यवहाराच्च तन्तवोनष्टा इत्यनुमातव्यम्। न च कारणनाशे दग्धतन्तुषु पटदाहवत् पटनाशापत्तिरित्याशङ्क्यम् तन्तूनां पटकारणत्वस्याद्यापि असिद्धत्वात् ये हि भावकारणका भावा इति वदे-युस्तान् प्रत्येवैतद्दूषणमवतरेत् नाभावकारणत वादिनं प्रतीति सुस्थितम-भावकारणवादिवौद्धादिमतम्।

(१) सतः-त्रैकालिकबाधरहितात् कूटस्थवदपरिणामिनः विवर्त्तः स्वा-ज्ञानकल्पितः स्वज्ञाननिवर्त्त्यः परिणामविलक्षणः अन्यथाभावापत्तिः उपचा-रात् तथा उत्पद्यमानं कार्य्यजातमपि विवर्त्तः न वस्तु सदिति वस्तुतः पारमार्थिकेन सत्त्वेनान्वितं न, किन्तु व्यवहारयोग्यसत्तयान्वितम्। तथाहि शुक्तिकादौ रजतादिज्ञानं सर्वानुभवसिद्धं तच्च प्रत्यक्षमेव रजतं साक्षात्-करोमीत्याद्यनुभवात्। प्रत्यक्षे च विषयेन्द्रियसन्निकर्षः कारणं तथाच देशान्तरस्थितरजतस्य चक्षुरसन्निकृष्टतया न प्रत्यक्षविषयता। न च पूर्व्वज्ञातस्य रजतस्य ज्ञानेन उपनीतस्य शुक्तिकायां भ्रम इतिवाच्यम् ज्ञानो पनीतस्य ज्ञानस्वीकारे साक्षात्कारानुभवापलापापत्तेः। अतएव न पूर्व्वा-नुभूतरजतस्मरणमात्रमनुभवविरोधात्। अतोऽगत्या तत्र शुक्तिकायामस-द्रजतमुत्पद्यते इत्येव कल्पनीयम्। तदुत्पत्तौ च शुक्तिकादिविषयकमज्ञानं कारणं रजतविषयसंस्कारश्च तत्सहकारितया कल्पनीयः। तदेव अध्यस्तत्वम् यदुत्पन्नस्य तस्यासतोरजतस्य शुक्तिकातादात्म्येन तत्प्रत्यक्षविषयता। तत्रो-त्पन्नेऽपि रजते शुक्तिकाया मनागपि व्यवहारिकसत्त्वस्य व्याघातो न भवतीति यथा, एवं कूटस्थे अपरिणामिनि आत्मनि स्वाज्ञानेनाहृते विय-दादिकमध्यस्तमुत्पद्यते तत्र च तदज्ञानं हेतुः तत्संस्कारश्च सहकारीति तथाच विवादाध्यासिता घटादयःसति अध्यस्तास्तज्ज्ञाननाश्यत्वे सति सत्तादात्म्येन

सतोऽस (१) ज्जायतइति । सतः (२) सज्जायते इति द्वन्द्वाः । तत्र पूर्व्वस्मिन् क(प)क्षत्रये प्रधानं न सिध्यति । सुखदुःखमोहभेदवत्स्वरूपपरिणामशब्दाद्यात्मकत्वं हि जगत्कारणस्य, प्रधानत्वं सत्त्वरजस्तमःस्वभावत्वम् । यदि (३) पुनरसतः सज्जायेत असन्निरुपाख्यं (४) कारणं कथं सुखादिरूपशब्दा

---

प्रतीयमानत्वात् शुक्तितादात्म्येन प्रतीयमानशुक्तिज्ञाननाश्यरजतवदित्यनुमानात् अध्यस्तत्वं घटादीनां सिद्धम् । अध्यस्तत्वं च साक्षात्कारिप्रत्यक्षविषयत्वं प्रागुक्तं तच्च तस्यासतोऽप्यनुत्पत्तौ प्रत्यक्षविषयता न स्यादिति अध्यस्तत्वरक्षार्थं तस्मिन्नुत्पत्तिरभ्यङ्गीकार्य्या । ज्ञाननाश्यत्वं च तेषां मिथ्यात्वात् शुक्तिज्ञानाश्यासद्रजतवदित्यनुमातव्यमित्यास्तां विस्तरेण इति वेदान्तिमतम् ।

(१) सतो भावात् विद्यमानादेवेत्यर्थः असत् उत्पत्तेः, कारणव्यापाराद्वा पूर्व्वमविद्यमानं, कारणव्यापारादुत्तरन्तु जायते सम्भवतीति काणादनैयायिकादयः ।

(२) सतः स्वत्वाश्रयात् भावादेव सत्, कारणव्यापारात् प्रागपि,कारणावस्थारूपसूक्ष्मरूपेण विद्यमानं जायते कारणव्यापाराद्भिव्यज्यते व्यवहारयोग्यतामापाद्यते इति यावदिति द्वन्द्वाः साङ्ख्यादयः ।

(३) एवमुत्पत्तिविषये चतुर्षु प(क)क्षेषु स्थितेषु आद्यप(क)क्षत्रये अनुमितिसितकार्य्यात्मककारणरूपप्रधानासिद्धिं क्रमश. प्रदर्शयितुं क्रमप्राप्तं बौद्धपक्षमाह यदि पुनरित्यादि ।

(४) निरुपाख्यमनिर्व्वचनीयमिदन्तया वक्तुमशक्यमितियावत् सति हि लक्षणे वस्तु तल्लक्षणवत्त्वेन वक्तुं शक्यम् अभावस्य च लक्षणाभावात् कथङ्कारं वक्तव्यता । यद्यपि भावभिन्नत्वं, सत्त्वेन प्रतीत्यनर्हत्वम्, असत्त्वेन प्रतीत्यर्हत्व वा तल्लक्षणं कैश्चिदुच्यते तानि च सर्व्वाण्यपि अभावज्ञानसापेक्ष ।

द्यात्मकं स्यात् सदसतोस्तादात्म्यानुपपत्तेः । अथैकस्य सतो (१) विवर्त्तः शब्दादिप्रपञ्चस्तथापि सतः सज्जायत इति न स्यात्। नचाद्वयस्य प्रपञ्चात्मकत्वमपि त्वप्रपञ्चस्य प्रपञ्चात्मकतया प्रतीतिर्भ्रम एव । येषामपि कणभक्षाक्षचरणादीनां सतएव कारणादसतोजन्म तेषामपि सदसतो रेकत्वानुपपत्तेर्न (२) कार्य्यात्मकं कारणमिति न प्रधानसिद्धिः अतः प्रधानसिद्ध्यर्थं प्रथमं तावत्सत्कार्य्यं प्रतिजानीते (३) ।

**असदकरणादुपादानग्रहणात्सर्वसम्भवाभावात् ।**
**शक्तस्य शक्यकरणात्कारणभावाच्च सत्कार्यम् ॥९॥**

---

तया दुर्ज्ञेयत्वादन्योन्याश्रयदोषग्रस्तत्वाच्चालक्षणान्येव । सुखदुःखमोहात्मककार्यदर्शनात् कारणस्यापि तथाभूतात्मकत्वमनुमित्सितं तच्च भावस्यैव कारणतापक्षे सेत्स्यति नाभावस्य भावाभावयोस्तादात्म्यानुपपत्तेरिति भावः।

(१) विवर्त्तवादे च कार्य्यजातस्य अध्यासेन सत्तादात्म्यभानेऽपि वस्तुतोऽसत्त्वेन सदसतोस्तादात्म्यानुपपत्त्या पूर्व्ववन्नानुमित्सितप्रधानसिद्धिरित्याह अथैकस्येत्यादि ।

(२) सतोऽसज्जायते इति पक्षेऽपि सदसतोस्तादात्म्यानुपपत्त्यैव न प्रधानसिद्धिरित्याह सदसतोरेकत्वेत्यादि ।

(३) एवमाद्यपक्षत्रिके प्रधानासिद्धिमुद्भाव्य सत्कार्य्यपक्षे तत् साधयितुं सत्कार्य्यपक्षसमर्थनाय कारिकामवतारयति सत्कार्य्यं प्रतिजानीते इत्यादि ।

सत्कार्य्यं कारणव्यापारात्(१) प्रागपीति शेषः। तथाच न सिद्धसाधनं नैयायिकनयैरुद्भावनीयम्। यद्यपि(२) वीजमृत्पिण्डादिप्रध्वंसानन्तरमङ्कुरघटाद्युत्पत्तिरुपलभ्यते तथापि (३) न प्रध्वंसस्य कारणत्वमपि तु भावस्यैव वीजाद्यवयवस्य। अभावात्तु

---

(१) कार्य्यं सत् कारणव्यापारात् प्रागपि विद्यमानमित्यर्थः तेन कारणव्यापारोत्तरं सत्त्वस्य नैयायिकादिवादिषु सिद्धत्वेन न सिद्धसाधनमिति दर्शयितुं विशिनष्टि कारणव्यापारादित्यादि।

(२) चतसृषु वादिविप्रतिपत्तिषु दर्शितासु असत्कार्य्यपक्षनिराकरणेऽपि इतरयोः पक्षयोरनिराकरणात् तत्पक्षयोः प्रधानासिद्धिरित्याशङ्क्य मूले तन्निराकरणाभावेऽपि अयुक्तत्वादेव तयोः पक्षयो र्न ग्राह्यतेति कथयितुमादौ बौद्धपक्षं दूषयितुमुत्थापयति यद्यपीत्यादि।

(३) दूषयति तथापीत्यादि। अयमाशयः संबद्धं संबन्धिनमेव जनयतीति नियमेन कार्य्यकारणयोः संबन्धोऽपेक्षितः वीजनाशाङ्कुरयोश्च केनापि सम्बन्धेन न संबन्धिता घटते येन तयोः कार्य्यकारणभावः स्यात्। असंबद्धस्य कार्य्यजनकत्वे सर्व्वस्मात् सर्व्वकार्य्योत्पत्तिरित्यव्यवस्था स्यात्। न च वीजेष्वेवाङ्कुरप्रागभावः न तन्तुष्वित्यत्र स्वभाव एव शरणं तथा च अङ्कुरप्रागभाव एव नियामकोभविष्यतीति वाच्यम् प्रागभावस्य सूक्ष्मावस्थातिरिक्तत्वे अङ्कुरतत्प्रागभावयोश्च विभिन्नकालिकतया केनापि संबन्धेन संबन्धित्वाभावेन नियामकत्वाभावात् असंबद्धस्य नियामकत्वे पूर्व्वदोषतादवस्थ्यात्। न च प्रतियोगितासंबन्धेन तयोः संबन्धितेति वाच्यम् अभावसंबन्धिताया एव प्रतियोगितापदार्थतया तस्याश्चास्मत्पक्षेऽसिद्धत्वात् न च वीजस्य नाशात् कथं तस्य अङ्कुरकारणत्वमिति, तस्य नाशेऽपि तदवयवस्यानाशात् तस्यैव कारणत्वं वाच्यमिति सर्वं सुस्थम्।

भावोत्पत्तौ तस्य सर्व्वत्र सुलभत्वात्सर्व्वत्र सर्व्वकार्य्योत्पादप्रसङ्ग इत्यादि न्यायवार्त्तिकतात्पर्य्यटीकायामभिहितमस्माभिः। प्रपञ्च-प्रत्ययश्चासति बाधके न शक्योमिथ्येति वक्तुमिति(१)। कणभ-क्षाक्षचरण(२) मतमवशिष्यते। तत्रेदं प्रतिज्ञातं सत्कार्य्य-

---

(१) विवर्त्तवादे च यद्यपि तदनन्यत्वमारम्भणशब्दादिभ्य इति २, १, १४ शा० सूत्रेण कार्य्यकारणयोरभिन्नत्वमेव स्वीकृतं तथापि घटपटादि-ज्ञानानामध्यस्तविषयकतया विषयाणां मिथ्यात्वं तैरङ्गीक्रियते तथाहि विवादाध्यासितानि घटादिज्ञानानि अध्यस्तविषयकाणि नित्याविषयक-ज्ञानत्वात् शुक्तिकायां रजतज्ञानवदित्यनुमानेन घटादिज्ञानानामध्यस्त-विषयकत्वे सिद्धे अध्यस्तस्य च ज्ञाननाश्यतया मिथ्यात्वमित्यसत्त्वमेव तथाच सदसदोस्तादात्म्यानुपपत्तिदोषेण नैतत्पक्षाश्रयणम्। किञ्च मिथ्यात्वं ज्ञाननिवर्त्त्यत्वं तच्च नेदं रजतमिति बाधबुद्ध्या यथा रजतस्य मिथ्यात्वं प्रसिद्धमेवं घटादेर्मिथ्यात्वसाधकस्य बाधस्यादर्शनान्न तस्य मिथ्यात्वमेवञ्च हेत्वसिद्धेः कथं घटादिज्ञानानामध्यस्तविषयकत्वसिद्धिः। एतदर्थमेव असति बाधके इत्युक्तम्। तथा च शुक्तिरजतबाधकवदत्र बाधकाभावान्न मिथ्यात्वम्। न चाद्वैतश्रुतिरेव बाधिका, तस्याः अन्यार्थपरतया द्वैताभावनिषेधपरत्वा-भावात् अतएव नाद्वैतश्रुतिविरोधो जातिपरत्वादित्यनेन १, ५४, साङ्ख्य सूत्रेण श्रुतेः समानजातीयबद्धजीवपरत्वं समर्थितम्।

(२) एवं पक्षद्वयमयुक्तिकतया निरस्य दृढयुक्तिकस्य काणादादि-पक्षस्य निरसनीयतयाऽवशेषतां दर्शयति कणभक्षेत्यादि कणमन्नकणं भक्षयतीति कणभक्षः कणादः। अक्षं चक्षुश्चरणे यस्येति अक्षचरणो

मिति। अत्र हेतुमाह असदकरणात् असच्चेत्कारणव्यापारात् पूर्व्वं कार्य्यं, नास्य सत्त्वं केनापि कर्तुं शक्यं. न हि नीलं शिल्पिसहस्रेणापि शक्यं पीतं कर्तुम्। सदसत्त्वे(१) घटस्य धर्म्माविति चेत् तथाप्यसति(२) धर्म्मिणि न तस्य धर्म्म इति सत्त्वं तदवस्थमेव तथा च नासत्त्वम् असम्बद्धेनातदात्मना वाऽसत्त्वेन कथमसन्

---

गोतमः। तच्छिष्येण व्यासेन "एतेन शिष्टापरिग्रहा अपि व्याख्याता"इति २, १, १२, शा० सूत्रेण शिष्टापरिग्रहोक्त्या अनादर्त्तव्यतया तन्मतं दूषितं ततस्तदुपरि क्रुद्धेन गोतमेन तस्य चक्षुषा मुखदर्शनं न कार्य्यमिति संकल्पे कृते पश्चात् व्यासेन प्रसादने शिष्यवत्सलत्वात् योगमाहात्म्येन चरणे चक्षुः प्रकाश्य व्यासोद्दष्ट इत्यतोऽस्य अक्षचरणेति संज्ञा प्रसिद्धेत्यैतिह्यम्।

(१) ननु भावस्य सत्त्वमसत्त्वं च कादाचित्को धर्म्मो न तु स्वाभाविकः तथा च उत्पत्तेः प्राक् असत्त्वं परतस्तु सत्त्वम् यथा घटे पाकात् पूर्व्वं श्यामता, पाकोत्तरं रक्तता, तद्वत् कालविशेषे धर्म्मविशेषो भविष्यतीति असत्कार्य्यपक्षेऽपि न काचित् क्षतिरिति शङ्कते सदसत्त्वे इति।

(२) परिहरति तथाप्यसतीति। अयमाशयः असत्त्वस्य भावधर्म्मत्वे उत्पत्तेःप्रागपि तस्य धर्म्मिणः सत्त्वं स्वीकर्त्तव्यं तथाहि धर्म्मसत्त्वं धर्म्मिसत्त्वं विनानुपपद्यमानं धर्म्मिसत्त्वमपि तदाक्षिपति तथाचापादकेन असत्त्वरूपधर्म्मसत्त्वेन आपाद्यस्य धर्म्मिसत्त्वस्य सिद्धिः। सत्त्वं-कार्य्यसत्त्वं तदवस्थं उत्पत्तेः प्रागपि स्थितमिति न तदानीं धर्म्मासत्त्वासिद्धिरित्याह तथाच नासत्त्वमिति असत्त्वधर्म्मिणस्तदानीमपि सिद्धत्वान्न धर्म्मासत्त्वमित्यर्थः। तदेवोपपादयति असंबद्धेनेत्यादि। असंबद्धेन धर्म्मिणा सहेति शेषः असत्त्वेनेत्यत्रास्यान्वयः। अतदात्मना अतत्स्वरूपेण वा असत्त्वेन

घटः। तस्मात्कारण(१)व्यापारादूर्द्ध्वमिव ततः प्रागपि सदेव कार्य्यमिति। करणाच्चास्य सतोऽभिव्यक्तिरेवावशिष्यते। सतश्चाभिव्यक्तिरुपपन्ना। यथा पीड़नेन तिलेषु तैलस्य(२), अवघातेन धान्येषु तण्डुलानां, दोहनेन सौरभेयीषु पयसः। असतः करणे तु न निदर्शनं किञ्चिदस्ति। न खल्वभिव्यज्यमानं चोत्पद्यमानं वा क्वचिदसद्दृष्टम्। इतश्च कारणव्यापारात् प्राक् सदेव कार्य्यमित्याह उपादानग्रहणात् उपादानानि कारणानि तेषां ग्रहणं कार्य्येण सम्बन्धः उपादानैः कार्य्यस्य सम्बन्धादिति यावत्। एतदुक्तं भवति। कार्य्येण संबद्धं कारणं कार्य्यस्य जनकं सम्बन्धश्च कार्य्यस्यासतो न सम्भवति तस्मात्सदिति। स्यादेतत् असम्बद्धमेव कारणैः कस्मात्कार्य्यं न जन्यते तथाचासदेवोत्पत्स्यतेऽत आह सर्वसम्भवाभावात्। असम्बद्धस्य जन्यत्वे असम्बद्धत्वाविशेषेण सर्वं कार्य्यजातं सर्वस्माद्भवेत् नचैतदस्ति तस्मान्नासम्बद्धमसम्बद्धेन जन्यते अपि तु संबद्धं

---

घटः कथमसन् स्यात् असत्त्वाश्रयः स्यादित्यर्थः धर्मिणा सह संबद्धेनैव धर्मेण तदाश्रयत्वनियमात् असम्बद्धस्य च तादात्म्येनैव तथात्वनियमाच्च प्रकृते असत्त्वस्य घटेन सह संबन्धाभावात् तत्तादात्म्याभावाच्च न तदाश्रयत्वमिति भावः।

(१) सत्कार्य्यपक्षमुपसंहरति तस्मादिति।

(२) तैलस्य, तण्डुलानां, पयसश्चाभिव्यक्तिरित्यत्रानुकर्षेऽन्वयः।

संबद्धेन जन्यते इति। यथाहुः साङ्ख्यवृद्धाः असत्त्वे नास्ति (१) संबन्धः कारणैः सत्त्वसङ्गिभिः। असंबद्धस्य चोत्पत्ति-मिच्छतो न व्यवस्थितिरिति। स्यादेतत् असम्बद्धमपि तदेव (२)तत् करोति यत्र यत्कारणं शक्तं शक्तिश्च कार्य्यदर्शनादव-गम्यते अतोनाव्यवस्थेति अत आह शक्तस्य शक्यकरणात्। सा शक्तिः (३) शक्तकारणाश्रया सर्व्वत्र वा स्याच्छक्ये वा। सर्व्वत्र चेत्तदवस्थैवाव्यवस्था शक्ये चेत्कथमसति शक्ये तत्रेति वक्तव्यम्। शक्तिभेद एव स तादृशो यतः किञ्चिदेव कार्य्यं जनयेन्न सर्व्वमिति चेत् हन्त भोः शक्तिविशेषः कार्य्यसम्बद्धो वा स्यादसम्बद्धो वा, सम्बद्धत्वे नासता सम्बन्ध इति सत्कार्य्यम् असम्बद्धत्वे सैवाव्यवस्थेति सुष्ठूक्तं शक्तस्य शक्यकरणादिति। इतश्च सत्कार्य्यमित्याह कारणभावाच्च कार्य्यस्य कारणात्मक-त्वात् न हि कारणाद्भिन्नं कार्य्यं कारणञ्च सदिति कथं तद-भिन्नं कार्य्यमसद्भवेत्। कार्य्यस्य कारणाभेदसाधकानि च

---

(१) असत्त्वे कार्य्यस्य उत्पत्तेः प्रागसत्त्वे सत्त्वसङ्गिभिः सत्त्वाश्रयैः कारणैः सह सम्बन्धोनास्ति। असम्बद्धस्य चोत्पत्तौ प्रागुक्ता अव्यवस्थितिः सर्व्वस्मात् सर्व्वोत्पत्तिरित्येवं रूपा अव्यवस्था।

(२)प्रथमं तत्पदं द्वितीयान्तं कार्य्यपरं द्वितीयं तु कारणपरं प्रथमान्तम्।

(३) कार्य्यानुकूला कारणनिष्ठैव शक्तिः कार्य्यजननियामिकेत्यवसेयम् तथाच कार्य्यस्यासत्त्वे कथं तदनुकूलत्वं तस्याः स्यादिति समर्थयितुं शक्ते-रितरनिष्ठत्वं विकल्प्य दूषयति सा शक्तिरिति।

प्रमाणानि न पटस्तन्तुभ्योभिद्यते तद्धर्मत्वात्(१) इह यद्यतो(२) भिद्यते तत्तस्य धर्म्मो न भवति। यथा गौरश्वस्य। धर्मश्च(३) पटस्तन्तूनां तस्मान्नार्थान्तरम् (४) उपादानोपादेयभावाच्च(५)

---

(१) तद्धर्मत्वात् तेषां तन्तूनां धर्मत्वात् अवस्थाविशेषात्मकत्वात् स्वसत्त्वनियतसत्ताकत्वाद्वा।

(२) तत्सत्त्वनियतसत्ताकत्वरूपहेतुमध्येएव ऽन्वयव्याप्तेः प्रवेशात् व्यतिरेकव्याप्तिं दर्शयति यत् यतोभिद्यते इत्यादि तथा च व्यापकस्य धर्मत्वाभावस्य निवृत्त्या व्याप्यस्य भेदस्य निवृत्तेरभेदसिद्धिरिति भावः।

(३) पक्षे धर्मत्वरूपहेतुसत्त्वप्रदर्शनाय उपनयरूपन्यायाङ्गमाह धर्मश्चेत्यादि। धर्मत्वं च प्रागुक्तम्।

(४) निगमयति तस्मान्नार्थान्तरमिति। अन्योऽर्थः पदार्थः अर्थान्तरं मयूरव्यंसकादित्वात् समासे क्लीवता। पटः तन्तुभ्यो न भिन्नः पदार्थः किन्तु अभिन्न एवेत्यर्थः।

(५) उपादीयते कार्य्यजननाय विशेषरूपेण गृह्यते इत्युपादानम्, कार्य्यस्यानागतावस्थाविशेषाश्रयरूपं कारणं तदाश्रितस्वरूपावस्थापन्नं कार्यमुपादेयं तद्भावात् कार्य्यकारणविशेषरूपत्वादित्यर्थः तथा च कार्य्यस्यानागतावस्थाश्रयत्वमेवोपादानकारणत्वम्, तच्च अनागतावस्थापन्नकार्य्यरूपमेव अन्यस्य दुर्वचत्वात् अन्यथा सर्व एव सर्वकार्य्यजननाय उपादीयेरन् न च तथा उपादीयन्ते उपादीयन्ते च पटादिजननाय तन्तवः न तु मृदादयः। न च प्रागभावएव तस्य नियामकः तस्य अभावत्वेन स्वतोविशेषकत्वाभावात् प्रतियोग्युपरक्तस्य तस्य तथात्वकल्पनन्तु प्रतियोग्यसत्त्वकालेऽसम्भवात् उत्पत्तेः प्राक् प्रतियोगिनोऽसत्त्वेन तेन सह प्रागभावस्य संबन्धस्यानौचित्यात्। इत्यनागतावस्थापन्नकार्य्यात्मकत्वमुपादानस्य युक्तम् तस्मात् पटः न तन्तुभ्यो भिन्न इत्युपेयमिति भावः।

नार्थान्तरत्वं तन्तुपटयोः, ययोरर्थान्तरत्वं न तयोरुपादानोपादेयभावः यथा घटपटयोः उपादानोपादेयभावश्च तन्तुपटयोः तस्मान्नार्थान्तरत्वमिति। इतश्च नार्थान्तरत्वं तन्तुपटयोः संयोगाप्राप्त्यभावात्(१) पदार्थान्तरत्वे हि संयोगो दृष्टो यथा कुण्डबदरयोः अप्राप्तिर्वा(२) यथा हिमवद्विन्ध्ययोः नचेह संयोगाप्राप्ती तस्मान्नार्थान्तरत्वमिति। इतश्च पटस्तन्तुभ्यो न भिद्यते गुरुत्वान्तरकार्य्याग्रहणात्(३) इह यद्यस्माद्भिन्नं तस्मात्तस्य गुरु-

(१] संयोगाप्राप्त्यभावादिति। संयोगश्च अप्राप्तिः विभागश्च तयोरभावात्। तथा च संयोगाभावः विभागाभावश्च पृथक् अभेदसाधकः यथा—पटस्तन्तुभ्यो न भिद्यते तत्संयोगानाश्रयत्वात् यद्यतो भिद्यते तयोः संयोगोदृष्टः यथा घटपटयोः। नच गुणेषु व्यभिचारः स्वमते तत्र तन्त्वभेदस्येष्टत्वात् द्रव्यत्वे सतीति हेतोर्विशेषणे च व्यभिचाराभावाच्च।

(२) अप्राप्तिर्वेति विभागश्चेत्यर्थः तथा च संयोगानाश्रयत्वस्येव विभागानाश्रयत्वस्यापि अभेदसाधकत्वमिति भावः।

(३) गुरुत्वान्तरकार्य्याग्रहणादिति। अयमाशयः। अवयवतन्तुपरिमाणेनेव तद्गुरुत्वेन स्वापेक्षयाधिकं महत्परिमाणमिवाधिकं गुरुत्वम्, जन्यते गुरुत्वञ्च पतन इव स्वाश्रिततुलादण्डादेरवनतिविशेषे हेतुरिति नैयायिकादिभिरभ्युपगम्यते। तत्र यदि पटस्तन्तुभ्योभिद्येत तदा तदाश्रितगुरुत्वविशेषेण स्वाश्रिततुलादण्डादेरवनतिविशेषोऽत्र गृह्येत यथा एकपलिकस्वर्णापेक्षया द्विपलिकस्वर्णस्य तथा च पटस्तन्तुभ्यो न भिद्यते गुरुत्वान्तरप्रयुक्तस्वाश्रिततुलादण्डाद्यवनतिविशेषग्रहणायोग्यत्वात् गुरुत्वान्तरयुक्तस्वर्णादिवत् तुल्यगुरुत्वयुक्तपदार्थे व्यभिचारवारणाय ग्रहणायोग्यत्वादित्युक्तं तस्य च पृथक् तुलादण्डारोपणेऽवनत्यन्तरस्य ग्रहणसम्भवात् तन्तुपटयोश्च न तथासम्भव इति तथात्वमित्यन्यत्र विस्तरः।

त्वान्तरकार्य्यं गृह्यते यथैकपलिकस्य स्वस्तिकस्य यो गुरुत्व-कार्य्योऽवनतिविशेषस्ततो द्विपलिकस्य स्वस्तिकस्य गुरुत्वका-र्य्योऽवनतिविशेषोऽधिकः न च तथा तन्तुगुरुत्वकार्य्यात्(१) पटगुरुत्वस्य कार्य्यान्तरं दृश्यते तस्मादभिन्नस्तन्तुभ्यः पट-इति। तान्येतान्यवीतान्य(२) भेदसाधनानि। तदेवमभेदे सिद्धे तन्तवएव तेन तेन संस्थानभेदेन परिणताः पटः,(३)न तन्तुभ्योऽ-र्थान्तरं(४) पटः। स्वात्मनि(५)क्रियानिरोधबुद्धिव्यपदेशार्थक्रि-

---

(१) तन्तुगुरुत्वस्य कार्य्यं स्वाश्रिततुलादण्डादेरवनतिविशेषस्तस्मात् कार्य्यान्तरम् अवनत्यन्तरं न दृश्यते न गृह्यते इत्यर्थः।

(२) अवीतानि व्यतिरेकव्याप्तियुक्तानि यथा च तत्र तत्र व्यतिरेकव्या-प्तिस्तथानुपदं तत्रतत्र दर्शितं प्राक्।

(३)पटइति बुद्धिविषयाः व्यपदेशभाजश्चेति शेषः।

(४) फलितमाह न तन्तुभ्योर्थान्तर मिति।

(५) अभेदसाधकहेतोः सत्प्रतिपक्षितत्वमाशङ्कते स्वात्मनीत्यादि।

क्रिया उत्पादनक्रिया, निरोधः प्रध्वंसस्तयोर्बुद्धिः तथा च कार्य्यकारण-योरभेदे कार्य्यस्य कारणात्मकत्वेन स्वतः स्वस्योत्पत्तिविनाशबुद्ध्यसम्भव इत्यर्थः। व्यपदेशः व्यवहारः, अर्थक्रिया प्रयोजनोत्पादनं क्रियाव्यवस्था प्रावरणादिकार्य्यनियमः तेषां भेदः पश्चात्पुनर्द्वन्द्वः। तथा च कार्य्यकारणयोरभेदे तन्तुषु पट इति कथं भेदव्यपदेशः, कथं वा प्रयोजनान्तरजनकता,प्रयोजना-न्तरनियमश्च स्यादित्यर्थः। इत्यत्रात्र प्रयोगः पटस्तन्तुभ्यो भिद्यते तत्कार्य्य-त्वेन, तत्र नष्टत्वेन वा प्रतीयमानत्वात्, तन्तुषु पट इति व्यपदेशप्रयोजक

याक्रियाव्यवस्थाभेदाश्च नैकान्तिकं(१) भेदं साधयितुमर्हन्ति एकस्मिन्नपि (२) तत्तद्विशेषाविर्भावतिरोभावाभ्यामेतेषामविरोधात् । यथाहि कूर्मस्याङ्गानि कूर्मशरीरे निविशमानानि तिरोभवन्ति निःसरन्ति चाविर्भवन्ति न तु कूर्मतस्तदङ्गान्युत्पद्यन्ते प्रध्वंसन्ते(३)वा एवमेकस्या मृदः सुवर्णस्य वा घटमुकुटादयोविशेषा निःसरन्त आविर्भवन्त उत्पद्यन्त इत्युच्यन्ते न पुनरसतामुत्पादः सतां वा निरोधः । यथाह भगवान्

---

संज्ञाभेदात्, विभिन्नार्थसाधकत्वात्, कार्य्यभेदवत्त्वाच्च । इतिपञ्चभिर्हेतुभिः सत्प्रतिपक्षितोऽभेदसाधनहेतुर्नाभेदसाधनायालमित्याशङ्कार्थः ।

(१) समाधत्ते नैकान्तिकमिति । ऐकान्तिकं वास्तवमित्यर्थः तथा च तत्र तत्रावास्तवएव भेदव्यवहारो न वास्तवाभेदप्रतिद्वन्द्वीति भावः । एवञ्च बुद्धिमात्रस्य, व्यवहारमात्रस्य वा वास्तविकत्वप्रयोजकत्वे इदं रजतमि तिबोधात् व्यवहाराच्च शुक्तिरजतस्यापि वास्तवत्वापत्तिः । तथा अर्थक्रियाक्रियाव्यवस्थाभेदयोश्च न भेदसाधकत्वम् एकस्यैव वह्न्यादेः प्रकाशनपाचनादिरूपनानाकार्य्याणां, विष्टीनां व्यस्तानां मार्गदर्शनादिकार्य्यस्य समस्तानां तु शिविकावाहनादिविभिन्नकार्य्यस्य च सम्पादनस्य दृष्टत्वात् तत्र तत्र हेतोर्व्यभिचाराच्च तयोर्भेदसाधकतेति न सत्प्रतिपक्षितत्वमभेदसाधकहेतोरिति भावः ।

(२) तदेव क्रमश उपपादयति एकस्मिन्नपीति ।

(३) प्रध्वंसन्ते नश्यन्ति कूर्मत इत्यनुषङ्गः अस्मिन् पक्षे च कूर्मे इत्यर्थः सार्व्वविभक्तिकः सप्तम्यास्तसिल् ।

कृष्णद्वैपायनः नासतोविद्यते (१) भावो नाभावो विद्यते सत इति। यथा कूर्मः स्वावयवेभ्यः सङ्कोचिविकाशिभ्योन भिन्नःएवं घटमुकुटादयोऽपि मृत्सुवर्णादिभ्यो न भिन्नाः।एवञ्चेत् तन्तषु पटइति व्यपदेशो यथेह वने तिलका इत्युपपन्नः। न चार्थक्रियाभेदोऽपिभेदमापादयति(२) एकस्यापि (३)नानार्थक्रियादर्शनात् यथैक एव वह्निर्दाहकः प्रकाशकः पाचकश्चेति। नाप्यर्थक्रियाव्यवस्था वस्तुभेदे हेतुः तेषामेव समस्तव्यस्तानामर्थक्रियाव्यवस्थादर्शनात् यथा प्रत्येकं विष्टयो वर्त्मदर्शनलक्षणामर्थक्रियां कुर्व्वन्ति न तु शिविकावहनं मिलितास्तु शिविकां वहन्ति एवं तन्तवः प्रत्येकं प्रावरणमकुर्व्वाणा अपि मिलिताः

---

(१) असतोऽसत्त्वाश्रयस्य, भावः, सत्त्वम् सतः सत्त्वाश्रयस्य न अभावः असत्त्वम्, सदसतोरेकत्र समावेशाभावादिति शेषः इति भगवद्गीता।

(२) आपादयति व्यतिरेकव्याप्त्या साधयति तथा च प्रावरणादिक्रियाभेदः कारणभेदं विना अनुपपन्न इति व्यापकः प्रावरणादिप्रयोजनभेदाभावः निवर्त्तमानः व्याप्यं कारणभेदाभावं निवर्त्तयन् कार्य्यस्य कारणाद्भेदम् साधयतीत्यर्थः।

(३) इति यन्मतं तदनूद्य नञा दूषयित्वा तत्र हेतुप्रदर्शनाय व्यभिचारं दर्शयति एकस्यापीति तथा च कार्य्यभेदाभावः न कारणभेदाभावव्यापकः एकस्मिन् वह्न्यादौ नानाकार्य्यदर्शनात् तथा च भेदसाधकहेतुर्व्यभिचारीति भावः।

आविर्भूतपटभावाः प्रावरिष्यन्ति। स्यादेतत् (१)। आविर्भावः पटस्य कारणव्यापारात् प्राक् सन्नसन्वा असंश्चेत् प्राप्तं तर्ह्यसत उत्पादनम्। अथ सन्, कृतं(२)तर्हि कारणव्यापारेण, न हि सति कार्य्ये कारणव्यापारप्रयोजनं पश्यामः। आविर्भावे चाविर्भावान्तरकल्पनेऽनवस्थाप्रसङ्गः। तस्मादाविर्भूतपटभावास्तन्तवः क्रियन्त(३) इति रिक्तं वचः। अथासदुत्पद्यत इत्यत्रापि मते केयमसदुत्पत्तिः सती असती वा, सती चेत् कृतं तर्हि कारणैः असती चेत्तस्या अप्युत्पत्त्यन्तरमित्यनवस्था। अथोत्पत्तिः (५)पटान्ना-

---

(१) एवम् भेदसाधकहेतुषु दूषितेषु इदानीं आविर्भावादेः सदसत्त्वे विकल्पेन दूषयितुं शङ्कते स्यादेतदित्यादि।

(२) कृतमित्यव्ययम् अलमर्थकं कारणव्यापारेणेतितृतीयान्तेनान्वयि तथा च कारणव्यापारसाध्यं नास्ति तस्य स्वतएव सिद्धत्वादित्यर्थः।

(३) क्रियन्ते उत्पाद्यन्ते पटरूपेण व्यवह्रियन्ते इत्यपि बोध्यम्।

(४) यद्वि उभयवादिनोस्तुल्यदोषत्वं न तद्दूष्यमित्याशयेन प्रतिवन्दिरूपदूषणदानायाह अथासदुत्पद्यतइत्यादि।

(५) उत्पत्तिः आद्यक्षणसंबन्धः स च स्वरूपसंबन्धविशेषः न तु संयोगमात्रः गुणक्रियादेस्तदसम्भवात् तयोश्च उत्पत्तिव्यवहारस्य सर्वसिद्धत्वात्। प्रकृते स्वरूपसंबन्धविशेषश्च अनुयोगिस्वरूप एव एवञ्च उत्पत्तिःपटरूप एव नार्थान्तरमिति पटस्य उत्पत्तेः प्राक् असत्त्वात् तत्र कारणव्यापारापेक्षा भविष्यतीति शङ्कते अथोत्पत्तिरित्यादि।

र्थान्तरम् अपि तु पटएवासौ तथापि (१) यावदुक्तं भवति पटइति तावदुक्तं भवत्युत्पद्यतइति। ततश्च पटइत्युक्ते उत्पद्यतइति न वाच्यं पौनरुक्त्यात् विनश्यतीत्यपि(२) न वाच्यं उत्पत्तिविनाशयोर्युगपदेकत्र (३) विरोधात्। तस्मादियं (४) पटोत्पत्तिः स्वकारणसमवायो वा स्वसत्तासमवायो वा उभय-

---

(१) दूषयति तथापीति। पटादिशब्देन पटत्वविशिष्टस्यैव उत्पत्तिमतोऽप्युक्तत्वात् उपद्यते इति न प्रयोक्तव्यम् तदुक्तार्थस्योक्तत्वात् तदुक्तौ च पौनरुक्त्यात् घटो घट इतिवत् न तत्र शाब्दबोध इति भावः।

(२) पटादिशब्दस्य उत्पत्त्यर्थकत्वे दूषणान्तरमप्याह विनश्यतीत्यादि न वाच्यं प्रयोक्तुं न शक्यम् अयोग्यत्वादिति शेषः। पटशब्देन पटत्वविशिष्टस्यैव उत्पत्तिमतोऽप्यभिधानात् उत्पत्तिमति चैकदा विनाशप्रतियोगित्वासम्भवेनायोग्यत्वादित्यर्थः।

(३) अयोग्यत्वे हेतुमाह उत्पत्त्यादीति एकत्र एकस्मिन् धर्म्मिणि युगपदेकदा विरोधात्। सहानवस्थानात् कालान्तरे भवितुमर्हतीति द्योतनाय युगपदिति। विनश्यतीति वर्त्तमानताप्रतीतेर्नैर्विभिन्नकालता तयोरिति भावः।

(४) एवमुत्पत्तेः पटस्वरूपत्वाभावासम्भवसङ्का अन्यरूपतास्वीकारेऽपि उत्पत्तेरुत्पत्त्यसम्भव एवेत्याह तस्मादियं पटोत्पत्तिरित्यादि। स्वकारणसमवायः स्वस्य कारणेषु तन्तुषु समवायः संबन्धविशेषरूपा पटोत्पत्तिः समवायस्य च सर्वदा विद्यमानत्वात् न तस्या उत्पत्तिः। समवायस्य नित्यत्वात् पटस्य कादाचित्कोत्पत्तिः कथं स्यादित्यतः पक्षान्तरमाह स्वसत्तासमवाय इति। स्वसत्तया स्वकारणे विद्यमानतया यः कारणे समवाय स्तथाच स्वसत्ताकालिकत्व विशिष्टसमवायस्य पूर्व्वमसत्त्वान्न न कादाचित्कत्वव्याघात इति भावः।

थापि नोत्पद्यते(१) अथ च तदर्थानि कारणानि(२) व्यापार्यन्ते एवं सत एव पटादेराविर्भावाय कारणापेक्षेत्युपपन्नम्। न च(३) पटरूपेण कारणानां सम्बन्धः, तद्रूपस्या (४) क्रियात्वात् क्रियासम्बन्धित्वाच्च कारकाणाम् अन्यथा कारणत्वाभावात्। तस्मात्(५) सत्कार्य्यमिति पुष्कलम् ॥९॥

तदेवं प्रधानसाधनानुगुणं सत्कार्य्यमुपपाद्य यादृशं तत् प्रधानं साधनीयं तादृशमादर्शयितुं विवेकज्ञानोपयोगिनी व्यक्ताव्यक्तसारूप्यवैरूप्ये तावदाह।

---

(१) उभयथापि उत्पत्तेरुभयरूपमध्येऽन्यतररूपत्वेऽपीत्यर्थः न उत्पद्यते उत्पत्तिरिति शेषः। समवायात्मकोत्पत्तिक्रियाया नित्यत्वादिति भावः।

(२) उत्पत्तेः सिद्धस्वरूपत्वेऽपि सर्वजनानुभवसिद्धायाः कारणव्यापारापेक्षाया अनौचित्यस्य उभयमतेऽपि तुल्यत्वात् प्रतिवन्दिसमवधानमिति भावः।

(३) उत्पत्तेः कार्य्यस्य रूपेण सम्बन्धरूपतां शङ्कते न चेति पटरूपस्य तन्तुरूपजन्यत्वात् तेन सह कारणानां संबन्धएव कार्य्यस्य उत्पत्तिस्तथा च तस्य जन्यत्वात् कारणव्यापारापेक्षेति न समानं दूषणमिति भावः।

(४) दूषयति रूपस्येति। रूपस्य भवन्मते गुणत्वेन क्रियारूपत्वाभावात् उत्पत्तेश्च क्रियारूपतायाः सर्व्वैरिष्यमाणत्वात् कारणानां च क्रियानुबन्धित्वेनैव कारकत्वाभ्युपगमात् तन्तुभ्यः पटउत्पद्यते इत्यादिषु च तन्त्वादीनामुत्पत्तिकारकत्वप्रतीतेश्च नोत्पत्तेः पटरूपसंबन्धरूपतेति भावः।

(५) उपसंहरति तस्मादिति। उक्तहेतोरित्यर्थः कार्य्यं सदिति पुष्कलम् अदुष्टहेतुसिद्धमित्यर्थः।

**हेतुमदनित्यमव्यापि सक्रियमनेकमाश्रितं लिङ्गम्।**
**सावयवं परतन्त्रं व्यक्तं विपरीतमव्यक्तम्॥१०॥**

व्यक्तं(१)हेतुमत् हेतुः कारणं तद्वत्। यस्य च यो हेतुस्तस्य तमुपरिष्टाद्वक्ष्यति(२) अनित्यं विनाशि(३) तिरोभावीति यावत्। अव्यापि सर्वं परिणामिनं न व्याप्नोति कारणेन हि कार्य्यमाविष्टं, न कार्य्येण कारणम्,। न च बुद्ध्यादयः प्रधानं वेविषन्ती(४) त्यव्यापकाः। सक्रियं परिस्पन्दवत्(५)तथाहि बुद्ध्यादयउपात्तमुपात्तं देहं त्यजन्ति देहान्तरञ्चोपाददतइति तेषां परिस्पन्दः शरीरपृथिव्यादीनाञ्च परिस्पन्दः प्रसिद्ध एव। अनेकं(६)

---

(१) व्यक्तमिति लक्ष्यनिर्द्देशः शिष्टानि लक्षणानि। हेतुमत् सकारणं कार्य्यमित्यर्थः।

(२) प्रकृते र्महानित्यादि २२ कारिकायाम्।

(३) सत्कार्य्यवादे प्रागभावाप्रसिद्धेः विनाशाप्रतियोगित्वमेव नित्यत्वमित्याशयेनाह अविनाशीति प्रागभाववत् विनाशस्यापि स्वमते ऽसत्त्वादाह तिरोभावीति। स्वस्वकार्य्यस्य तिरोभावः स्वस्वकारणे तिष्ठतीति स्वीकारात् प्रधानस्य कारणान्तराभावाच्च प्रलयेऽपि न तस्य तिरोभाव इति न व्यभिचार इति भावः।

(४) विष ऌ व्याप्तौ जुहोत्यादिः।

(५) परिस्पन्दश्चेह नियताध्यवसायादिविशेषकार्य्यकरत्वम् प्रकृतेश्च सर्व्वक्रियासाधारण्यान्न तथात्वम् एवञ्च प्रकृतेः रजोगुणात्मकत्वेन रजसश्च क्रियाहेतुत्वान्न तत्रातिव्याप्तिः रजः क्रियायाः सर्व्वसाधारण्येनातथात्वादिति भावः।

(६) अनेकत्वं सर्गभेदे भिन्नत्वं सर्गद्वयासाधारण्यमितियावत् न तु सजा-

प्रतिपुरुषं बुद्ध्यादीनां भेदात् पृथिव्याद्यपि शरीरघटादिभेदेनानेकमेव। आश्रितं स्वकारणे आश्रितं बुद्ध्यादि कार्य्यम्। अभेदेऽपि हि कथञ्चिद्भेदविवक्षया आश्रयाश्रयिभावः। यथेह वने तिलकाइत्युक्तम्। लिङ्गं प्रधानस्य। यथाचैते बुद्ध्यादयः प्रधानस्य लिङ्गं तथोपरिष्टाद्वक्ष्यति(१)। प्रधानन्तु प्रधानस्य न लिङ्गं पुरुषस्य लिङ्गं भवदपीति भावः। सावयवम् अवयवनमवयवः मिथःसंश्लेषोमिश्रणं संयोग इति यावत् अप्राप्तिपूर्व्विका प्राप्तिः संयोगः तेन सह वर्त्ततइति सावयवं तथाहि पृथिव्यादयः परस्परं संयुज्यन्ते एवमन्येऽपि न तु प्रधानस्य बुद्ध्यादिभिः संयोगस्तादात्म्यात् नापि सत्वरजस्तमसां परस्परं संयोगः अप्राप्तेरभावात्। परतन्त्रं बुद्ध्यादि, बुद्ध्या स्वकार्य्येऽहङ्कारे जनयितव्ये प्रकृत्यापूरणमपेक्ष्यते अन्यथा क्षीणा सती नालमहङ्कारं जनयितुमिति व्यवस्थितिः। एवमहङ्कारादिभिरपि स्वकार्य्यजनने इति। सर्वं स्वकार्य्ये प्रकृत्यापूरणमपेक्षते तेन प्रकृतिं परामपेक्षमाणं कारणमपि स्वकार्य्योपजनने परतन्त्रं व्यक्तम्। विपरीतमव्यक्तं व्यक्तात्, अहेतुमन्नित्यं व्यापि निष्क्रियम्। यद्यप्यव्यक्तस्यास्ति परिणामलक्षणा क्रिया तथापि परिस्पन्दो नास्ति। एकमनाश्रितमलिङ्गमनवयवं स्वतन्त्रमव्यक्तम् ॥१०॥

---

तीयानेकव्यक्तिकत्वं तथात्वे प्रकृतेरपि सत्वादीनामतद्धर्म्मत्वं तद्रूपत्वादिति साङ्ख्यसूत्रेण तेषां तदात्मकत्वेन सत्वाद्यनेकरूपत्वात् तत्रातिव्याप्तेः।

(१) कारणमस्त्यव्यक्तमित्यादि १६ कारिकादौ।

तदनेन प्रबन्धेन व्यक्ताव्यक्तयोर्वैधर्म्म्यमुक्तम् । सम्प्रति तयोः साधर्म्म्यं पुरुषाच्च वैधर्म्म्यमाह ।

**त्रिगुणमविवेकि विषयः सामान्यमचेतनं प्रसवधर्म्मि ।**
**व्यक्तं तथा प्रधानं तद्विपरीतस्तथा च पुमान् ॥११॥**

त्रिगुणं त्रयो गुणाः सुखदुःखमोहा अस्येति (१) त्रिगुणं तद-नेन सुखादीनामात्मगुणत्वं पराभिमतमपाकृतम् । अविवेकि यथा प्रधानं न स्वतोविविच्यते एवं महदादयोऽपि न प्रधाना-

---

(१) व्यक्ताव्यक्तयोः सुखदुःखमहात्मकत्वेऽपि धर्म्मधर्म्मिणोर्भेदविव-क्षया अस्येति षष्ठी । गुणशब्दस्य स्वमतसिद्धसत्त्वादिपरत्वेऽपि प्रकृते तत्कार्य्यसुखादिपरत्वादुक्तम् सुखदुःखमोहाइति । इदमत्रानुमानम् सुख-दुःखमोहधर्म्मिणी बुद्धिः सुखदुःखमोहधर्म्मकद्रव्योपादानिका कार्य्यत्वे सति सुखदुःखमोहात्मकत्वात् कान्तादिवदिति । कारणगुणानुसारेणैव कार्य्य-गुणौचित्यं चात्रानुकूलतर्कः । यथा च एकस्या एव कान्ताया व्यक्तिभेदेन सुख-दुःखाद्यात्मकत्वं तथाग्रे वक्ष्यते । अथ अहं सुखीत्याद्यनुभवात् अहंबुद्ध्यालम्ब-नस्यैव सुखादिमत्त्वात् विषयस्य सुखादिमत्त्वाभावेन कान्तादिवदित्युदाहरणे हेत्वसिद्धिरिति चेत् अहंसुखीत्यादिबुद्धेर्बुद्धिविषयकत्वेन सुखाद्यात्मकबुद्धेः प्रागुक्तानुमानेन तत्कार्य्यत्वेन शब्दादिविषयेष्वपि सुखादिमत्त्वानुमानेन च तत्सिद्धेः चन्दनं सुखं माल्यं सुखमित्यनुभवेन च विषयाणामपि सुखादि-मत्त्वानुभवाच्च । किञ्च यस्यान्वयव्यतिरेकौ सुखादिना सह गृह्येते तस्यैव सुखाद्युपादानत्वं कल्प्यं लाघवात् न तु तस्य निमित्तत्वं प्रकल्प्यान्यस्योपादा-नत्वकल्पनं गौरवात् एतेनात्मगुणत्वं पराभिमतमापाकृतम्, । यदि च शब्दादि-

द्विविच्यन्ते तदात्मकत्वात्। अथ वा सम्भूयकारित्वमविवेकः। न हि किञ्चिदेकं पर्य्याप्तं स्वकार्य्ये, अपि तु सम्भूय, तत्र नैकस्मात्कस्यचित्केनचि(१)त्सम्भवइति। ये त्वाहुर्विज्ञानमेव(२) हर्षविषादमोहशब्दाद्याकारं न पुनरितोऽन्यस्तद्धर्मेति तान् प्रत्याह

---

तन्मात्ररूपे व्यक्ते सुखदुःखाद्यात्मकत्वासम्भवः "तस्मिंस्तस्मिंश्च तन्मात्रास्तेन तन्मात्रता स्मृता। न शान्ता नापि घोरास्ते न मूढाश्चाविशेषिणः" इति विष्णुपुराणे तेषां शान्तादिपदाभिधेयसुखदुःखाद्यनात्मकत्वेनाविशेषवत्त्वात् तन्मात्रपदाभिधेयतया उक्तेः। तदा विग्रहवाक्ये सुखदुःखमोहशब्दास्तत्कारणीभूतसत्वादिगुणपरा इत्येवमवसेयम्, तथा च प्रधानस्य सत्त्वाद्यात्मकत्वेऽपि वने वृक्षा इत्यादिवत् भेदविवक्षया षष्ठी बुद्ध्यादौ च कारणतया सत्त्वादीनां सत्त्वान्नाधारतात्यतिरिति सूक्ष्ममीक्षणीयम्।

(१) केनचित् प्रकारेणेत्यर्थः।

(२) हर्षविषादादिः आकारो यस्य तादृशं विज्ञानमेवैकः पदार्थः ततोऽन्यः भिन्नः वाह्यः तद्धर्म्मा तत् हर्षादि धर्मौ यस्य तदाधारइत्यर्थः न नास्ति। स च विज्ञानवादस्येत्यम्। यथा स्वप्नमायामरीच्युदकरज्जुसर्पगन्धर्व्वनगरादिप्रत्ययाः विनैव वाह्यार्थेन ग्राह्यग्राहकाकारा भवन्ति एवं जागरितविषयस्तम्भादिप्रत्यया अपि भवितुमर्हन्तीत्यवगम्यते प्रत्ययत्वाविशेषात्। असत्यपि वाह्यार्थे वासनावैचित्र्यात् प्रत्ययवैचित्र्यम् अनादौ च संसारे विज्ञानानां वासनानाञ्च वीजाङ्कुरवत् परस्परनिमित्तनैमित्तकभावेन भावनावैचित्र्यम्, न विरुध्यते। स्वप्नादिषु चान्तरेणाप्यर्थं वासनानिमित्तस्य ज्ञानवैचित्र्यस्य सर्व्वैः स्वीकारात् जागरितेऽपि तथा बौद्धैः कल्प्यते इति विशेषः। अनुभवात्मकस्य ज्ञानस्य योऽयं प्रतिविषयं स्तम्भज्ञानं घटज्ञानं पटज्ञानमिति पक्षपातः नासौ ज्ञानगताकारं विनोपपद्यते इत्यवश्यं विषयाकारसारूप्यं

विषयइति विषयो ग्राह्यो विज्ञानाद्बहिरिति यावत् अतएव सामान्यं साधारणं घटादिवत् अनेकपुरुषैर्गृहीतमिति यावत् विज्ञानाकारत्वे त्वसाधारण्याद्विज्ञानानां वृत्तिरूपाणां तेप्यसाधारणाः स्युः विज्ञानं यथा परेण न गृह्यतेपरबुद्धेरप्रत्यक्षत्वादित्यभिप्रायः। तथा च नर्तकीभ्रूलताभङ्गे एकस्मिन् बहूनां प्रतिसन्धानं युक्तम् अन्यथा न स्यादिति भावः। अचेतनम्-सर्वएव प्रधानबुद्ध्यादयोऽचेतनाः न तु वैनाशिकवच्चैतन्यं बुद्धेरित्यर्थः। प्रसवधर्मि-प्रसवरूपो धर्म्मो यः सोऽस्यास्तीति प्रसवधर्मि प्रसवधर्मेति(१) वक्तव्ये मत्वर्थीयः प्रसवधर्म्मस्य नित्य-

---

ज्ञानस्याङ्गीकर्त्तव्यम् अङ्गीकृते च तस्मिन् तेनैव सर्व्वव्यवहारसम्भवात् निरर्थिकाऽर्थसद्भावकल्पना "सहोपालम्भनियमादभेदो नीलतद्धियो"रित्युक्तेः विषयविज्ञानयोरभेद एव नह्यनयोरेकस्यानुपलम्भेऽन्यस्योपलम्भो भवति। तस्मात् वाह्यार्थाभावेऽपि तत्तत्प्रत्ययसम्भवइति। तन्मतं दूषयितुमुत्थापयति तान् प्रत्याहेति। अयमाशयः। विषयो विषयितोभिद्यते विषयत्वात्प्रदीपप्रकाश्यघटवत्, विषयी विषयेभ्यो भिद्यते विषयित्वात् घटादिप्रकाशकप्रदीपवद् वा इत्यनुमानेन विषयविषयिणोर्भेदसिद्धे नाभेदानुमानम्। किञ्च विषयस्य विज्ञानस्वरूपत्वे वृत्तिरूपविज्ञानस्वरूपत्वं वाच्यं वृत्तीनाञ्च प्रतिपुरुषं भिन्नतया विषयाणां प्रतिपुरुषं भेदापत्तिः तथा च एकस्मिन् नर्त्तकीभ्रूभङ्गे कथं बहूनां युगपत् प्रतिसन्धानं स्यात् तत्प्रसन्धानञ्च तदुत्तरं मिथस्तेषां तथाभिलापात् अनुमीयते तथाच विषयिणोविषयाकारेणैव व्यवहारोपपत्तावपि प्रतिपुरुषं भेदापत्ते र्न वाह्यार्थविरहः इतिभावः।

(१) धर्म्मादनिच् केवलादिति सूत्रेण यद्यपि पदान्तरपूर्व्वकाद्विहित पूर्व्वकादेव धर्म्मादनिच् विहितस्तथाचात्र प्रसवपदस्य गेतिपदान्तरपूर्व्व-

योगमाख्यातुम् (१) सरूपविरूपपरिणामाभ्यां न कदाचिदपि वियुज्यत इत्यर्थः। व्यक्तवत्त(२)मव्यक्तोऽतिदिशति तथा प्रधानमिति यथा व्यक्तं तथा प्रधानम्। ताभ्यां वैधर्म्यं पुरुषस्याह तद्विपरीतः पुमान्। स्यादेतत् (३) अहेतुमत्त्वनित्यत्वादि प्रधानसाधर्म्यमस्ति पुरुषस्य, एवमनेकत्वं व्यक्तसाधर्म्यं तत्कथमुच्यते तद्विपरीतः पुमानित्यत आह तथा चेति चकारोऽप्यर्थः (४) यद्यप्यहेतुमत्त्वादिसाधर्म्यं तथाप्यत्रैगुण्यादिवैपरीत्यमस्येत्यर्थः ॥ ११ ॥

त्रिगुणमित्युक्तं तत्र के ते त्रयोगुणाः किञ्च तल्लक्षणमित्यत आह ।

---

कत्वान्न केवलत्वमिति नानिष्टप्रसङ्गः। तथापि प्रशब्दस्य नित्यसमस्तत्वया न पदान्तरत्वमिति न प्रसवशब्दस्य केवलत्वव्याघातः।

(१) बहुव्रीहिणैव प्रसवधर्म्मवत्त्वलाभे मतर्थीयनिर्द्देशं समर्थयते नित्ययोगमाख्यातुमिति। "भूम्नि निन्दाप्रशंसासु नित्ययोगेऽतिशायने। संबन्धेऽस्तिविवक्षायां भवन्ति मतुबादयः" इत्युक्तेरिनिर्नित्ययोगार्थक इत्यर्थः।

(२) व्यक्तवत्त्वं व्यक्तेषु बुद्ध्यादिषु वृत्तं स्थितं यत् त्रिगुणत्वादि।

(३) तयोर्व्यक्ताव्यक्तयोः विपरीतधर्म्मवत्त्वम् यत् पुरुषस्योक्तं तत्र शङ्कते स्यादेतदित्यादिना।

(४) समाधत्ते तथा चेति। तथा च ताभ्यां सर्व्वधर्म्मेण न वैपरीत्यं किन्तु त्रैगुण्यादिधर्मैणैव वैपरीत्यमिह विवक्षितं तथा च त्रैगुण्यादिकमेव तयोर्लक्षणं नित्यानेकत्वादिकन्तु परिचायकमिति द्रष्टव्यम्।

**प्रीत्यप्रीतिविषादात्मकाः प्रकाशप्रवृत्तिनियमार्थाः।
अन्योन्याभिभवाश्रयजननमिथुनवृत्तयश्च गुणाः॥१२**

गुणा इति(१)परार्थाः सत्त्वं लघु प्रकाशकमित्यत्र च सत्त्वादयः क्रमेण निर्देक्ष्यन्ते(२)। तदनागतावेक्षणेन(३)तन्त्रयुक्त्या(४) वा प्रीत्यादीनां(५)यथासंख्यं वेदितव्यम्। एतदुक्तं भवति प्रीतिः सुखं प्रीत्यात्मकः सत्वगुणः,अप्रीतिर्दुःखं अप्रीत्यात्मको रजोगुणः, विषादो मोहः विषादात्मकस्तमोगुणइति। ये तु(६) मन्यन्ते नं

---

(१) पराभिमतं कर्म्मभिन्नत्वे सति द्रव्योपादानकत्वं नेह गुणत्वं तेषां चलादिक्रियादिमत्त्वेन पराभिमतद्रव्यत्वेन गुणत्वाभावादिति गुणशब्दस्य अर्थान्तरपरतामाह परार्थाइति परोपकरणानीत्यर्थः। भवति च सत्वादीनां पुरुषार्थभोगसाधनजनकत्वेन परार्थत्वम्।

(२) अत्र कारिकायां सत्त्वादीनां लक्षणनिर्देशेऽपि तेषां नामोल्लेखाभावात् कस्य लक्ष्यत्वमित्याशङ्क्य "सत्त्वं लघु प्रकाशक"मित्यग्रिमकारिकास्थानि सत्त्वादीनि इह अपकृष्यान्वेतव्यानीत्याख्यातुमाह निर्देक्ष्यन्ते इति।

(३) अनागतावेक्षणेन अनागतानां भाविकारिकायां निर्देक्ष्यमाणानां सत्त्वादीनामवेक्षणेन इहाकृष्यानुसन्धानेन तत्-लक्षणं, वेदितव्यमित्यत्रान्वयि।

(४) सकृदुच्चरितः शब्दः सकृदर्थं गमयतीत्युक्तेः तत्र कारिकायामुक्तानां सत्वादीनां सकृदुच्चारणेन तत्रैव तेषामन्वयेनाकाङ्क्षाविरहादिहान्वयासम्भव इत्यत आह तन्त्रयुक्त्या वेति। तन्त्रेण उच्चरितस्यापि यथा उभयत्र युक्तिरन्वयः तथात्रान्वये न दोष इत्यर्थः।

(५) प्रीत्यादीनां सत्त्वादिगुणात्मकत्वं लक्षणमिति शेषः।

(६) कारिकास्थस्य विषादात्मका इत्यत्रात्मशब्दस्य स्वरसव्याख्यानेन इतरमतं निराकर्त्तुमुपन्यस्यति ये तु मन्यन्तेइति।

प्रीति र्दुःखाभावादतिरिच्यते एवं दुःखमपि न प्रीत्यभावादन्य-दिति तान् प्रत्यात्मग्रहणम्(१)। नेतरेतराभावाः सुखादयः अपि तु भावाः आत्मशब्दस्य भाववचनत्वात् प्रीतिरात्मा (२) भावो येषां ते प्रीत्यात्मानः। एवमन्यदपि व्याख्येयम्। भावरूपता चैषा-मनुभवसिद्धा परस्पराभावात्मकत्वे तु परस्पराश्रयापत्तेरेक-स्याप्यसिद्धेरुभयासिद्धिरिति भावः। स्वरूपमेषामुक्त्वा प्रयो-जनमाह प्रकाशप्रवृत्तिनियमार्थाः(३) अत्रापि यथासंख्यमेव। रजः प्रवर्त्तकत्वात्सर्व्वत्र लघु सत्त्वं प्रवर्त्तयेत् यदि तमसा गुरुणा न नियम्येत। तमोनियतन्तु क्वचिदेव प्रवर्त्तयतीति भवति तमो नियमार्थम्! प्रयोजनमुक्त्वा क्रियामाह अन्योन्याभिभवा-श्रयजननमिथुनवृत्तयश्च वृत्तिः क्रिया सा च प्रत्येकमभिस-म्बध्यते। अन्योन्याभिभववृत्तयः एषामन्यतमेनार्थवशादुद्भूते-नान्यदभिभूयते। तथाहि सत्त्वं रजस्तमसी अभिभूय शान्ता-मात्मनो वृत्तिं प्रतिलभते एवं रजः सत्त्वतमसी अभिभूय

---

(१) आत्मशब्दनिर्द्देशेन तन्मतनिरास इत्याह तान् प्रत्यात्मग्रहणमिति।

(२) यथाचात्मशब्देन तन्मतनिरासस्तथात्मशब्दस्य भावपरत्वकथनेन समर्थयते प्रीतिरात्मा भावइति। "द्वन्द्वात् परः श्रूयमाणः शब्दः प्रत्येकमभि-संबध्यते" इत्युक्तेः आत्मशब्दस्य प्रीत्यादिभिः सर्व्वैः संबन्धः।

(३) प्रकाशार्थं सत्वं, प्रवृत्त्यर्थं रजः, नियमार्थं तमः, इति गुणानां प्रकाशादिकार्य्यकारित्वम्, तच्च क्रमेण समर्थयते रजः प्रवर्त्तकत्वादिति प्रवृत्तिरूपकार्य्यकरत्वादित्यर्थः एवमुत्तरत्रापि।

घोराम्,(१)एवं तमः सत्वरजसी अभिभूय मूढ़ामिति। अन्योन्याश्रयवृत्तयः। यद्यप्याधाराधेयभावेन नाश्रयार्थो घटते तथापि यदपेक्षया यस्य क्रिया स तस्याश्रयः तथाहि सत्त्वं प्रवृत्तिनियमावाश्रित्य(२) रजस्तमसी प्रकाशेनोपकरोति, रजः प्रकाशनियमावाश्रित्य प्रवृत्त्येतरयोः,(३)तमः प्रकाशप्रवृत्ती आश्रित्य नियमेनेतरयोरिति। अन्योन्यजननवृत्तयः अन्यतमोऽन्यतमं जनयति जननञ्च(४)परिणामः स च गुणानां सदृशरूपः अतएव न हेतुमत्त्वं तत्त्वान्तरस्य हेतोरभावात्। नाप्यनित्यत्वं(५)तत्त्वान्तरे लयाभावात्। अन्योन्यमिथुनवृत्तयः अन्योन्यसहचराः

---

(१) घोरामात्मनोवृत्तिं प्रतिलभते इत्यनुषङ्गः। एवमुत्तरत्र।

(२) प्रवृत्तिनियमौ रजस्तमसोः कार्य्यौ आश्रित्य उपकरोति प्रवृत्तिनियमावित्यनुकृष्यात्वान्वितौ। सम्बन्धविवक्षया वा रजस्तमसो रिति कर्म्मणि षष्ठी।

(३) इतरयोः सत्वतमसोः उपकरोतीत्यनुकृष्टेनान्वयः एवमुत्तरत्रापि।

(४) अन्यतमोऽन्यतमं जनयतीत्युक्तौ तेषां हेतुमत्त्वापत्तिस्तथाच हेतुमत्त्वं व्यक्तलक्षणं यदुक्तं तदव्यक्ते व्यभिचारीत्यतः जननशब्दस्यार्थान्तरपरतां दर्शयति जननञ्चेति स्वस्वरूपपरिणामं प्रत्येव सत्त्वादीनां हेतुत्वम् इतरयोश्च तथापरिणामने उपकारितामात्रम्। किञ्च हेतुमत्त्वं यत् पूर्व्वं व्यक्तलिङ्गमुक्तं तत् तत्त्वान्तरपरिणामरूपत्वरूपं प्रकृते च गुणानाम् स्वात्मकपरिणामञ्च हेतुत्वात् न तत्त्वान्तरहेतुत्वमतो न व्यभिचार इति निष्कर्षः।

(५) जन्यत्वेनानित्यत्वमाशङ्क्य अनित्यत्वरूपं व्यक्तलक्षणं गुणेष्वतिव्याप्तमाशङ्क्य समाधत्ते नाप्यनित्यमिति। तथाच तत्वान्तरे लीनत्वमेवानित्यत्वं तत्र विवक्षितमिति नातिप्रसङ्गः इति भावः।

अविनाभाववर्त्तिन इति यावत् च: समुच्चये भवति चात्रागम: "अन्योन्यमिथुना: सर्व्वे सर्वे सर्व्वत्र गामिन:। रजसोमिथुनं(१) सत्त्वं सत्त्वस्य मिथुनं रज:। तमसश्चापि मिथुने ते सत्त्वरजसी उभे। उभयो: सत्वरजसोर्मिथुनं तम उच्यते। नैषामादि: संप्रयोगो(२) वियोगो वोपलभ्यत" इति॥१२॥

प्रकाशप्रवृत्तिनियमार्था इत्युक्तम्। तत्र के ते इत्थम्भूता: कुतश्चेत्यत आह।

**सत्त्वं लघु प्रकाशकमिष्टमुपष्टम्भकं चलञ्च रज:।**
**गुरु वरणकमेव तम: प्रदीपवच्चार्थतोवृत्ति:॥१३॥**

सत्त्वमेव लघु प्रकाशकमिष्टं सांख्याचार्य्यै:,तत्र कार्य्योद्गमने हेतुर्धर्म्मोलाघवं गौरवप्रतिद्वन्द्वि यतोऽग्नेरूर्द्ध्वज्वलनं भवति तदेव लाघवं कस्यचित्तिर्य्यग्गमने हेतु र्यथा वायो: एवं। कर-णानां(३) वृत्तिपटुत्वहेतु र्लाघवं गुरुत्वे हि मन्दानि स्युरिति

---

(१) मिथुनं सहचारि स्वात्मकपरिणामे सहकारीत्यर्थ:।

(२) संप्रयोग: संयोग: प्रवाहरूपेणानादित्वात् न प्राथमिक: संयोग: इत्यर्थ:।

(३) करणानामिन्द्रियादीनां वृत्तौ स्वस्वविषयग्रहणे पटुत्वस्य पाटवस्य हेतु र्धर्मोलाघवं तथा च तादृशलाघवप्रयोजकत्वात् सत्वं प्रकाशकमिन्द्रियाणां स्वस्वविषयप्रकाशकमित्यर्थ:।

सत्वस्य प्रकाशकत्वमुक्तम् सत्वतमसी स्वयमक्रियतया स्वस्वकार्य्य-प्रवृत्तिं(१) प्रत्यवसीदन्ती रजसोपष्टभ्येते अवसादात् प्रच्याव्य स्वकार्य्ये ते उत्साहं प्रयत्नं कार्य्येते तदिदमुक्तमुपष्टम्भकं रजइति। कस्मादित्यत उक्तं चलमिति। तदनेन रजसः प्रवृत्त्यर्थत्वं दर्शितम्। रजस्तु चलतया परितस्त्रैगुण्यं(२) चालयद्गुरुणावृण्वता च तमसा तत्र प्रवृत्तिप्रतिबन्धकेन क्वचिदेव प्रवर्त्त्यते इति ततस्ततो (३) व्यावर्त्त्य तमोनियामक-मुक्तं गुरु वरणकमेव तमइति। एवकारः प्रत्येकं भिन्नक्रमः सम्ब-ध्यते सत्वमेव रजएव तम एव। ननु परस्परविरोधशीला गुणाः

(१) स्वस्वकार्य्यं स्वस्व प्रवृत्तिं प्रति प्रवृत्तिजननाय अवसीदन्ती अक्षमे सत्वतमसी रजसा अवष्टभ्येते इति यदुक्तं तस्यैव विवरणं अवसादादित्यादि।

(२) त्रयोगुणाएव त्रैगुण्यं सत्वादीनि परितः स्वस्वकार्य्यकरणाय चालयत् प्रवर्त्तयत् रजः, गुरुणा गौरवान्वितेन वृण्वता यत्र यत्र कार्य्य-जननाय तस्य प्रवृत्तिस्तत्र तत्र प्रतिबन्धकेन तमसा क्वचिदेव कार्य्ये न सर्व्वत्र प्रवर्त्त्यते कर्म्मक्षमं क्रियते इत्यर्थः। त्रैगुण्यमध्ये रजसोऽपि वर्त्तमानत्वात् यद्यपि कर्म्मकर्त्तृताविरोधस्तथापि रजोव्यक्तिभेदात् रजोव्यक्त्यन्तरं प्रत्येव रजोव्यक्त्यन्तरस्य चालकत्वमिति न विरोध इतिभावः।

(३) तमसोनियामकत्वं यदुक्तं तत्समर्थनायाह ततस्ततइत्यादि तथा च तस्मात् तस्मात् कार्य्यात् व्यावर्त्त्य रजसः प्रवृत्तिं रोधयित्वा तमो नियामक मित्यर्थः।

सुन्दोपसुन्दव(१) त्परस्परं ध्वंसन्ते इत्येव युक्तं प्रागेव(२)तेषा-मेकक्रियाकर्त्तृतायाः, इत्यतआह प्रदीपवच्चार्थतो(३)वृत्तिः, दृष्टमेतत् यथा वर्त्तितैले(४) अनलविरोधिनी अथ च मिलिते सहानलेन रूपप्रकाशलक्षणं कार्य्यं कुरुतः यथा च वातपित्तश्लेष्माणः(५) परस्परविरोधिनः शरीरधारणलक्षणकार्य्यकारिणः एवं सत्त्व-

---

(१) सुन्दोपसुन्दौ च असुरभेदौ सोदरभ्रातरौ तौ चेश्वरप्रसादेन स्वस्वभिन्नसकाशात् वधाभावं वरं लेभाते अथ एकां महिलाम् उभाभ्यां कामयमानाभ्यां परस्परप्रवर्त्तिते संग्रामे अन्योन्यताड़ितौ उभभावपि तौ हताविति पौराणिकी कथात्रानुसन्धातव्या। ताभ्यां तुल्यं परस्परनाश इतिभावः ।

(२) तेषां सत्वादीनांमेकक्रियायाः कर्त्तृतायाः स्वस्वव्यापारद्वारा एकस्याः क्रियायाः कार्य्यस्य कर्त्तृतायाः करणात् प्रागेव ध्वंसन्ते नश्यन्तीत्येव युक्तमित्यन्वयः तत्र हेतुः परस्परविरोधशीलादिति ।

(३) एवमाशङ्क्य समाधत्ते प्रदीपवदित्यादि ।

(४) वर्त्तिर्दशा तैलं च एते व्यस्ते अनलस्य तत्कार्य्यस्य प्रकाशनलक्षणस्य विरोधिनी तदकर्त्तृत्वात् अननुकूले तद्दाह्यत्वाद्वा तद्विरोधिनी। एवं तयोर्विरोधसत्त्वेऽपि प्रकाशनरूपकार्य्ये तयोस्तत्सहकारित्वमेव तथाच वस्तुनस्तेष स्वभावोयत् कचित् असामर्थ्येऽपि सहायान्तरसहकारेण कार्य्यं सामर्थ्यं यथा वर्त्तितैले प्रकाशनासमर्थेअपि अनलसहकारेण प्रकाशकेइति।

(५) वर्त्तितैलयोरुभयोरपि वह्निदाह्यत्वेन तद्विरोधित्वेऽपि वर्त्तितैलयोः प्रत्येकं वर्त्तेस्तैलं प्रति तैलस्य वा वर्त्तिं प्रति विरोधित्वाभावात् नैतदुदाहरणं सर्व्वांशे समानमित्यनुदाहरणत्वमाशङ्क्य सर्व्वांशे परस्परमिरोधि दृष्टान्तान्तर-

रजस्तमांसि मिथोविरुद्धान्यपि अनुवर्त्स्यन्ति च (१) स्वकार्य्यं करिष्यन्ति च। अर्थतः पुरुषार्थत इति यावत्। यथा वक्ष्यति "पुरुषार्थ एव हेतुर्न केनचित्कार्य्यते करण"मिति। अत्र च सुखदुःखमोहाः परस्परविरोधिनः स्वस्वानुरूपाणि सुखदुःख मोहात्मकान्येव निमित्तानि कल्पयन्ति। तेषाञ्च परस्पर-मभिभाव्याभिभावकभावान्नानात्वम्। तद्यथा(२) एकैव स्त्री रूपयौवनकुलशीलसम्पन्ना स्वामिनं सुखाकरोति तत्कस्य हेतोः? स्वामिनं प्रति तस्याः सुखरूपसमुद्भवात्। सैव स्त्री सपत्नी-र्दुःखाकरोति तत्कस्य हेतोः? ताः प्रति तस्या दुःखरूपसमुद्भवात्। एवं पुरुषान्तरं तामविन्दत् सैव मोहयति(३) तत्कस्य हेतोः?

---

माह वातपित्तश्लेष्माण इति। एतेषाञ्च परस्परविरुद्धकार्य्यकारित्वात् परस्परविरोधित्वं तच्च वैद्यके प्रसिद्धम्। शरीरस्य मानवस्थूलदेहस्य धारणं स्थापनं पोषणञ्च तद्रूपं यत्कार्य्यं तत्कारिणः देहस्थापकाः देहपोषकाश्च इत्यर्थः।

(१) अनुवर्त्स्यन्ति इतरकार्य्यजननेष्वानुगुण्यं सहकारितां करिष्यन्ति तदानुगुण्यकरणेन स्वकार्य्यं स्वस्वकार्य्यमित्यर्थः करिष्यन्ति च उभयप्राधान्य-द्योतनाय चकारद्वयम्।

(२) कुतस्तथाचरणमित्यत्र हेतुमाह अर्थतइति पुरुषार्थस्य भोगस्य कैवल्यस्य च कार्य्यस्य करणाय तेषां तथा वृत्तिः प्रवृत्तिरित्यर्थः।

(३) एतावता प्रबन्धेन सर्व्ववस्तूनां यत् त्रैगुण्यात्मकत्वेन तत्कार्य्यं सुखदुःखमोहात्मकत्वं स्थिरीकृतं तत्समर्थनाय एकस्यैव कार्य्यस्य पुरुषविशेषा-पेक्षया सुखदुःखात्मकत्वं दर्शयति तद्यथा एकैव स्त्रीत्यादि।

(४) तां स्त्रियमविन्दत् अलभमानं पुरुषान्तरं मोहयति मूढं करोतीत्यर्थः।

तत् प्रति तस्या मोहरूपसमुद्भवात् । अनया च(१) स्त्रिया सर्वे भावा व्याख्याताः । तत्र यत्सुखहेतुस्तत्सुखात्मकं सत्वं, यत् दुःखहेतुस्तद्दुःखात्मकं रजः, यन्मोहहेतुस्तन्मोहात्मकं तमः, सुखप्रकाशलाघवानां त्वेकस्मिन् युगपदुद्भूतावविरोधः सह-दर्शनात् । तस्मात्(२)सुखदुःखमोहैरिव विरोधिभिरेकैकगुण-वृत्तिभिः सुखप्रकाशलाघवैर्न निमित्तभेदा उन्नीयन्ते एवं दुःखोपष्टम्भकत्वप्रवर्त्तकत्वै रेवं मोहगुरुत्वावरणैरिति सिद्धं त्रैगुण्यमिति ॥ १२ ॥

स्यादेतत्(३) अनुभूयमानेषु पृथिव्यादिषु अनुभवसिद्धा भवन्त्वविवेकित्वादयः ये पुनः सत्वादयो नानुभवपथमधि-रोहन्ति तेषां कुतस्त्यमविवेकित्वं विषयत्वं सामान्यत्वमचेतनत्वं प्रसवधर्मित्वञ्चेत्यत आह ।

---

(१) दिङ्मात्रेण स्त्रीमात्रे दर्शिता प्रणाली सर्वत्रादर्त्तव्येत्याह अन-या चेत्यादि ।

(२) सुखदुःखमोहानां परस्परविरोधिनामपि यथैकस्मिन् स्त्रीजने व्यक्तिभेदापेक्षया स्थितिस्तथा तेषामपि सत्वादिधर्म्माणां विरुद्धानामपि प्रकाशलाघवादीनामेकस्मिन् तस्मिन् स्थितौ बाधकाभाव इत्युक्तमुपसंहरति तस्मादिति। एवञ्च प्रकाशादयो धर्म्मा भिन्नहेतुकाः धर्म्मत्वात् शीतोष्णत्वादि वदित्यनुमानादपि न हेतुभेदसिद्धिरित्याह न निमित्तभेदा उन्नीयन्ते । तथा च तदनुमापकहेतोः एकस्यां स्त्रियां नानाधर्म्मदर्शनात् व्यभिचार इतिभावः।

(३) एतत् एकस्यापि वस्तुनो व्यक्तिभेदापेक्षया नानारूपत्वं यदुक्तं तत् स्यात् सम्भावनाविषयं, भूतं भवेत् इत्यर्थः ।

**अविवेक्यादेः सिद्धिः त्रैगुण्यात्तद्विपर्ययेऽभावात्।**
**कारणगुणात्मकत्वात्कार्यस्याव्यक्तमपि सिद्धम्॥१४॥**

अविवेकित्वमविवेकियथा द्व्येकयोर्द्विवचनैकवचने(१) इत्यत्र द्वित्वैकत्वयोरिति अन्यथा द्व्येकेष्विति स्यात्। कुतः पुनरविवेकित्वादिसिद्धिरित्यत आह त्रैगुण्यात् यद्यत् सुखदुःखमोहात्मकं तदविवेक्यादियोगि(२) यथेदमनुभूयमानं व्यक्तमिति स्फुटत्वादन्वयेनोक्तम्(३)। व्यतिरेकमाह तद्विपर्ययेऽभावात् अविवेक्यादिविपर्यये पुरुषे त्रैगुण्याभावात् अथ वा(४)

(१) अविवेकीतिपदं भावप्रधाननिर्देशेन अविवेकित्वपरमिति यदुक्तं तत्र दृष्टान्तमाह द्व्येक योरिति पाणिना द्व्येकयोरित्यनेन द्वित्वे एकत्वे-चार्थे क्रमेण द्विवचनैकवचनसंज्ञकप्रत्ययौ अनुशिष्टौ न च तत्रा द्वित्व-विशिष्टैकत्वविशिष्टपरतास्त्विति वाच्यं तथात्वे द्वित्वविशिष्टयोः द्वित्वाश्रयतया एकस्य च एकत्वाश्रयतया तयोर्द्वन्द्वे तच्छब्दस्य बहुसंख्यकत्वेन बहुवचनापत्तिस्तथा च सूत्रे द्विवचननिर्देश एव द्वित्वैकत्वपरत्वे लिङ्गमिति भावः। आदिपदेन कारिकायां विषयत्वादयो ग्राह्याः।

(२)। अविवेक्यादियोगि अविवेकित्वादिमत् कारिकास्थं त्रैगुण्यादिति हेतुपदमत्रान्वेति।

(३) त्रैगुण्यसत्त्वे अविवेक्यादिसत्त्वमित्येवमन्वयः तस्य प्रथमसुक्तौ हेतुः स्फुटत्वादिति अन्वयव्याप्तेः स्फुटत्वात् अभावज्ञानानपेक्षित्वेन झटित्युपस्थितेरित्यर्थः।

(४)। ननु त्रैगुण्यस्याधुनाप्यसिद्धेः कुतस्तरां तदन्वयेन अविवेकित्वादि सिद्धिरित्याशङ्क्य व्यतिरेकव्याप्त्यैव व्यक्ताव्यक्तयोः सिद्धिरित्याह अथ-

व्यक्ताव्यक्ते पक्षीकृत्य अन्वयाभावेन त्रैगुण्यादिरवीत एव हेतुर्वक्तव्यः। स्यादेतत् अव्यक्तसिद्धौ सत्यां तस्याविवेक्यादयो धर्म्माः सिध्यन्ति अव्यक्तमेव त्वद्यापि न सिद्ध्यति तत्कथमविवेक्यादिसिद्धिरित्यत आह कारणगुणात्मकत्वात्कार्य्यस्य अव्यक्तमपि सिद्धम्। अयमभिसन्धिः कार्य्यं हि कारणगुणात्मकं दृष्टं यथा तन्त्वादिगुणात्मकं पटादि, तथा महदादिलक्षणेनापि कार्य्येण सुखदुःखमोहरूपेण स्वकारणगतसुखदुःखमोहात्मना भवितव्यं तथा च तत्कारणं सुखदुःखमोहात्मकं प्रधानमव्यक्तं सिद्धं भवति ॥ १४ ॥

स्यादेतत् व्यक्ताद्व्यक्तमुत्पद्यते इति कणभक्षाक्षचरणनयाः परमाणवो हि व्यक्तास्तैर्द्व्यणुकादिक्रमेण पृथिव्यादिलक्षणकार्य्यं व्यक्तमारभ्यते पृथिव्यादिषु च कारणगुणक्रमेण रूपाद्युत्पत्तिः तस्माद्व्यक्ताद्व्यक्तस्य तद्गुणस्य चोत्पत्तेः कृतमव्यक्ते नादृष्टचरेणेत्यत आह।

**भेदानां परिमाणात्समन्वयाच्छक्तितः प्रवृत्तेश्च। कारणकार्यविभागादविभागाद्वैश्वरूप्यस्य ॥ १५ ॥**

भेदानां विशेषाणां महदादीनां भूम्यन्तानां कार्य्याणां कारणं मूलकारणमस्त्यव्यक्तं, कुतः कारणकार्य्यविभागात् अविभागात् वैश्वरूप्यस्य। कारणे सत्कार्य्यमितिस्थितम्। तथा

---

वेत्यादि। अवीतः व्यतिरेकव्याप्तियुक्तो हेतुः तथाच व्यक्तमव्यक्तञ्च नाविवेकित्वादिमद्भिन्नं त्रैगुण्याभावे अभावात् पुरुषवदित्यनुमानम्।

च यथा कूर्म्मशरीरे सन्त्येवाङ्गानि निःसरन्ति विभज्यन्ते(१) इदं कूर्म्मशरीरम् एतान्यस्याङ्गानीति। एवं निविशमानानि तस्मिन्नव्यक्तीभवन्ति, एवं कारणात् मृत्पिण्डात् हेमपिण्डाद्वा कार्य्याणि घटकुण्डलमुकुटादीनि सन्त्येवाविर्भवन्ति विभज्यन्ते, सन्त्येव च पृथिव्यादीनि कारणात्तन्मात्रादाविर्भवन्ति विभज्यन्ते, सन्त्येव तन्मात्राण्यहङ्कारात् कारणात्, (२) सन्ने-वाहङ्कारः कारणान्महतः, सन्नेव च महान् परमाव्यक्तादिति, सोऽयं कारणात् परमाव्यक्तात् साक्षात्पारापर्य्येणान्वितस्य विश्वस्य कार्य्यस्य विभागः। प्रतिसर्गे (३) तु मृत्पिण्डं हेम-पिण्डं वा घटकुण्डलमुकुटादयो विशन्तोऽव्यक्तीभवन्ति तत्का-रणरूपमेवानभिव्यक्तं कार्य्यमपेक्ष्याव्यक्तम् भवति। एवं पृथिव्यादयस्तन्मात्राणि विशन्तः स्वापेक्षया तन्मात्राण्यव्य-क्तयन्ति, एवं तन्मात्राण्यहङ्कारं विशन्ति अहङ्कारमव्यक्त-यन्ति, एवमहङ्कारो महान्तमाविशन्महान्तमव्यक्तयति, महान् प्रकृतिं स्वकारणं विशन् प्रकृतिमव्यक्तयति, प्रकृतेस्तु न क्वचिन्निवेशइति सा सर्व्वकार्य्याणामव्यक्तमेव। सोऽयमविभागः प्रकृतौ वैश्वरूप्यस्य नानारूपस्य कार्य्यस्य। स्वार्थिकः ष्यञ्।

---

(१) निःसरन्ति सन्ति शत्रन्तमेतदेवमुत्तरत्र। विभज्यन्ते विभक्ततया व्यव-ह्रियन्ते तत्प्रकारमाह इदं कूर्म्मशरीरम्, एतान्यस्याङ्गानीति इत्येवं रूपेणेत्यर्थः।

(२) कारणादाविर्भवन्ति सन्ति विभज्यन्ते इति चानुवर्त्तते एवमुत्तरत्रापि।

(३) प्रतिसर्गोऽवान्तरसृष्टिः।

तस्मात्कारणे कार्य्यस्य सतएव विभागाविभागाभ्यामव्यक्तं कारणमस्तीति । इतश्चाव्यक्तमस्तीत्याह शक्तितः प्रवृत्तेश्च । कारणशक्तितः कार्य्यं प्रवर्त्तते इति सिद्धम् अशक्तात्कारणात्कार्यानुत्पत्तेः । शक्तिश्च कारणगता न कार्य्यस्याव्यक्तत्वादन्या । न हि सत्कार्य्यपक्षे कार्य्यस्याव्यक्ततायां अन्यस्यां शक्तावस्ति प्रमाणम् । अयमेव हि सिकताभ्यस्तिलानां तैलोपादानानां भेदो यदेतेष्वेव तैलमस्त्यनागतावस्थं न सिकतास्विति । स्यादेतत् शक्तितः प्रवृत्तिः कारणकार्य्यविभागाविभागौ च महतएव परमाव्यक्तत्वं साधयिष्यतइति कृतं ततः परेणाव्यक्तेनेत्यतआह परिमाणात् परिमितत्वादव्यापित्वादिति यावत् । विवादाध्यासिता महदादिभेदा अव्यक्तकारणवन्तः परिमितत्वाद्घटादिवत् । घटादयो हि परिमिता मृदाद्यव्यक्तकारणका दृष्टाः उक्तमेतद्यथा कार्य्यस्याव्यक्तावस्था कारणमेवेति । यन्महतः कारणं तत्परमव्यक्तं ततः परतरव्यक्तकल्पनायां प्रमाणाभावात् । इतश्च विवादाध्यासिता भेदा अव्यक्तकारणवन्तः समन्वयात् । भिन्नानां समानरूपता समन्वयः । सुखदुःखमोहसमन्विता हि बुद्ध्यादयोऽध्यवसायादिलक्षणाः प्रतीयन्ते । यानि च यद्रूपसमनुगतानि तानि तत्स्वभावाव्यक्तकारणकानि यथा मृद्धेमपिण्डसमनुगता घटमुकुटादयो मृद्धेमपिण्डाव्यक्तकारणकाइति कारणमस्त्यव्यक्तं भेदानामिति सिद्धम् ॥१५॥

अव्यक्तं साधयित्वा अस्य प्रवृत्तिप्रकारमाह ।

**कारणमस्त्यव्यक्तं प्रवर्त्तते त्रिगुणतः समुदयाच्च।**
**परिणामतः सलिलवत्प्रतिप्रतिगुणाश्रयविशेषात्॥१६**

प्रतिसर्गावस्थायां सत्वञ्च रजश्च तमश्च सदृशपरिणामानि भवन्ति परिणामस्वभावा हि गुणा नापरिणम्य क्षणमप्यवतिष्ठन्ते। तस्मात्सत्वं सत्वरूपतया रजोरजोरूपतया तमस्तमोरूपतया प्रतिसर्गावस्थायामपि प्रवर्त्तते तदिदमुक्तं त्रिगुणतइति। प्रवृत्त्यन्तरमाह समुदयाच्च समेत्योदयः समुदयः समवायः स च गुणानां न गुणप्रधानभावमन्तरेण सम्भवति न गुणप्रधानभावोवैषम्यं विना न च वैषम्यमुपमर्द्योपमर्द्दकभावादृते इति महदादिभावेन प्रवृत्तिर्द्वितीया। स्यादेतत् कथमेकरूपाणां गुणानामनेकरूपा प्रवृत्तिरित्यत आह परिणामतः सलिलवत् यथा हि वारिदविमुक्तमुदकमेकरसमपि तत्तद्भूमिविकारानासाद्य नारिकेलतालीविल्वचिरविल्वतिन्दुकामलकप्राचीनामलककपित्थफलरसतया परिणामान्मधुराम्लतिक्तकटुकषायतया विकल्पते एवमेकैकगुणसमुद्भवात् प्रधानं गुणमाश्रित्याप्रधानगुणाः परिणामभेदान् प्रवर्त्तयन्ति तदिदमुक्तं प्रतिप्रतिगुणाश्रयविशेषात् एकैकगुणाश्रयेण योविशेषस्तस्मादित्यर्थः॥ १६॥

ये तु तौष्टिकाः(१) अव्यक्तं वा महान्तं वा अहङ्कारं वा

(१) तुष्टिः प्रयोजनमेषां ठञ्। अल्पलाभेन कृतकृत्याः नाधिकलाभार्थं प्रयतमानाइत्यर्थः।

इन्द्रियाणि वा भूतानि वा आत्मानमभिमन्यमानास्तान्येवोपासते तान् प्रत्याह ।

**सङ्घातपरार्थत्वात्त्रिगुणादिविपर्य्ययादधिष्ठानात् ।
पुरुषोऽस्ति भोक्तृभावात्कैवल्यार्थं प्रवृत्तेश्च ॥ १७ ॥**

पुरुषोऽस्त्यव्यक्तादेर्व्यतिरिक्तः कुतः सङ्घातपरार्थत्वात् अव्यक्त महदहङ्कारप्रभृतयः परार्थाः सङ्घातत्वात् शयनासनाभ्यङ्गवत्सुख दुःखमोहात्मकतया अव्यक्तादयः सर्व्वे सङ्घाताः । स्यादेतत् शयनासनादयः सङ्घाताः संघातशरीराद्यर्था दृष्टा न तु आत्मानं व्यक्ताव्यक्तव्यतिरिक्तं प्रति परार्थाः तस्मात्सङ्घातान्तरमेव परं गमयेयुर्न त्वसङ्घातमात्मानमित्यतआह त्रिगुणादिविपर्य्ययात् । अयमभिप्रायः सङ्घातान्तरार्थत्वे हि तस्यापि सङ्घातत्वात् तेनापि सङ्घातान्तरार्थेन भवितव्यमेवं तेन तेनेत्यनवस्था स्यात् न च व्यवस्थायां सत्यामनवस्थाकल्पना युक्ता गौरवप्रसङ्गात् नच प्रमाणवत्त्वेन कल्पना गौरवमपि स्रष्यतइति युक्तं संहतत्वस्य पारार्थ्यमात्रेणान्वयात् । दृष्टान्तदृष्टसर्व्वधर्म्मानुरोधेन त्वनुमानमिच्छतः सर्व्वानुमानोच्छेदप्रसङ्ग इत्युपपादितं न्यायवार्त्तिकतात्पर्य्यटीकायामस्माभिः । तस्मादनवस्थाभिया अस्यासंहतत्वमिच्छता अत्रिगुणत्वमविवेकित्वमविषयत्वमसामान्यत्वं चेतनत्वमप्रसवधर्मित्वं चाभ्युपेयं त्रिगुणत्वादयो हि धर्म्माः सङ्घातत्वेन व्याप्ताः । तत् संहतत्वमस्मिन् परे नि-

ते हि दुःखाद्यात्मकाः कथं स्वभावाद्वियोजयितुं शक्यन्ते तदतिरिक्तस्य त्वतदात्मन(१) आत्मनस्ततो(२) वियोगः शक्यसम्पादः तस्मात्कैवल्यार्थं प्रवृत्तेरागमानां महर्षीणाञ्चास्ति बुद्ध्याद्यतिरिक्त आत्मेति सिद्धम् ॥ १७ ॥

तदेवं पुरुषास्तित्वं प्रतिपाद्य स किं सर्व्वशरीरेष्वेकः किमनेकः प्रतिक्षेत्रमिति संशये तस्य प्रतिक्षेत्रमनेकत्वमुपपादयति ।

**जन्ममरणकरणानां प्रतिनियमादयुगपत्प्रवृत्तेश्च ।**
**पुरुषबहुत्वं सिद्धं त्रैगुण्यविपर्य्ययाच्चैव ॥ १८ ॥**

पुरुषबहुत्वं सिद्धं कस्माज्जन्ममरणकरणानां प्रतिनियमात् निकायविशिष्टाभिरपूर्व्वाभिर्देहेन्द्रियमनोऽहङ्कारबुद्धिवेदनाभिः पुरुषस्याभिसम्बन्धोजन्म न तु पुरुषस्य परिणाम(३) स्तस्यापरिणामित्वात् तेषामेव च देहादीनामुपात्तानां परित्यागोमरणं न त्वात्मनोविनाशः तस्य कूटस्थनित्यत्वात् करणानि बुद्ध्यादीनि त्रयोदश(४) तेषां जन्ममरणकरणानां

(१) अतदात्मनः सुखदुःखमोहानात्मकस्य ।

(२) ततः दुःखात् वियोगः, शक्यः सम्पादो यस्य तथाभूतः स्यादित्यर्थः ।

(३) परिणामः विकारभेदो न जन्मेत्यन्वयः तत्र हेतुः अपरिणामित्वात् सति हि तस्य परिणामित्वे तद्रूपजन्मवत्त्वं स्यात् स एव तस्य नास्तीति ।

(४) बुद्धिर्महत्तत्त्वम्, अहङ्कारः, मनः, श्रोत्रादीनि पञ्च ज्ञानेन्द्रियाणि, वागादीनि पञ्च कर्म्मेन्द्रियाणि, चेति त्रयोदश।

प्रतिनियमो व्यवस्था सा खल्वियं सर्व्वशरीरेष्वेकस्मिन् पुरुषे नोपपद्यते तदा खल्वेकस्मिन् जायमाने सर्वे जायेरन् म्रियमाणे च म्रियेरन् अन्धादौ(१) चैकस्मिन् सर्वे एवान्धादयः विचित्ते(२) चैकस्मिन् सर्व्वएव विचित्ताः स्युरित्यव्यवस्था स्यात् प्रतिक्षेत्रं(३) पुरुषभेदे तु भवति व्यवस्था। नचैकस्यापि(४) पुरुषस्य देहोपाधानभेदाद्व्यवस्थेति युक्तं पाणिस्तनाद्युपाधिभे-नापि जन्ममरणादिव्यवस्थाप्रसङ्गात्(५)। नहि पाणौ वृक्णे, जाते वा स्तनादौ महत्यवयवे, युवतिर्जाता मृता वा भवतीति। इतश्च प्रतिक्षेत्रं पुरुषभेद इत्याह अयुगपत्प्रवृत्तेश्च

---

(१) अन्धत्वं दृक्शक्तिराहित्यम् आदिपदात् वाधिर्य्यादि तच्चेन्द्रियगतमपि तदाश्रयसंहतदेहाभिमानिनि पुरुषे उपचर्य्यते।

(२) विचित्तत्वं मनोवृत्तिराहित्यं तच्च सुषुप्तिकाले एव सम्भवति तथाचैकस्मिन् सुषुप्ते सर्व्वेऽपि सुषुप्ताः स्युरित्यापत्तिरिति भावः।

(३) प्रतिक्षेत्रं प्रतिदेहं यावन्तोदेहास्तावन्त एव तदभिमानिनः पुरुषाः कल्प्यन्ते इति भावः।

(४) अन्धत्वादीनामिन्द्रियधर्म्मतया जन्ममरणादीनां च देहधर्म्मतया इन्द्रियदेहादीनाञ्च परस्परं भेदात् पुरुषस्यैक्येऽपि उपाधिभेदेन घटाकाशादिभेदवत् देहाद्युपाधिभेदैर्जन्मादिव्यवस्थेति वेदान्तिमतमाशङ्क्य निराचष्टे नचैकस्यापीत्यादि।

(५) वस्तुन एकत्वे उपाधिभेदेन न व्यवस्थाकल्पनं युक्तं तथात्वे देहादेरिव देहावयवपाणिस्तनादीनामपि भेदकत्वं स्यात् तथा च पाणौ नष्टे पुरुषस्य नाशव्यवहारः स्तनादौ जाते च जन्मव्यवहारश्च स्यात्। वस्तुतः उपाधीना-

प्रवृत्तिः प्रयत्नलक्षणा यद्यप्यन्तःकरणवर्त्तिनी तथापि पुरुषे उपचर्य्यते तथाच तस्मिन्नेकत्र (१) शरीरे प्रयतमाने स एव सर्वशरीरेष्वेक (२) इति सर्वत्र प्रयतेत ततश्च सर्व्वाण्येव शरीराणि युगपच्चालयेत् (३) नानात्वे तु नायं दोषइति। इतश्च पुरुषभेद इत्याह त्रैगुण्यविपर्ययाच्चैव एवकारोभिन्नक्रमः सिद्धमित्यस्यानन्तरं द्रष्टव्यः सिद्धमेव नासिद्धम्। त्रयोगुणास्त्रैगुण्यं तस्य विपर्य्ययोऽन्यथाभावः केचित् खलु सत्वनिकायाः(४) सत्वबहुला यथोर्द्ध स्रोतसः(५) केचिद्रजोवहुलाः यथा मनुष्याः केचित्तमोबहुलाः यथा तिर्य्यग्योनयः सोऽयमीदृशस्त्रैगुण्यविपर्य्ययोऽन्यथाभावस्तेषु तेषु सत्व निकायेषु न भवेत् यद्येकः पुरुषः स्याद्भेदे त्वयमदोषइति ॥१८॥

एवं पुरुषबहुत्वं प्रसाध्य विवेकज्ञानोपयोगितया तस्य धर्म्मानाह।

---

मेव परस्परं भेदः न तु तदुपहितस्य भेदो युक्तियुक्तः विशिष्टस्यानतिरेकात् न हि छत्रादिमान् चैत्रः केवलचैत्रात् भिद्यते अतएव सूत्रकृता "उपाधिर्भिद्यते न तु तद्वा" नित्यनेन विशिष्टस्यानतिरेक पक्षएवाभ्युपगतः।

(१) तस्मिन् उपचरितप्रयत्ने पुरुषे एकत्र शरीरे एकदेहावच्छेदेनेत्यर्थः।

(२) सर्व्वशरीरेषु सर्व्वेषु देहेषु विभिन्नेष्वपि एकएव इति सर्व्वत्र देहेषु प्रयतेत स्वावच्छेद्यतयेति शेषः।

(३) एकस्य सर्व्वदेहावच्छेद्यत्वे दोषमाह युगकाच्चालयेदिति।

(४) सत्वस्य निकाया निवासाः देहा इत्यर्थः।

(५) ऊर्द्धस्रोतसः जितेन्द्रियारेतःसेकशून्या देवादयः।

**तस्माच्च विपर्य्यासात्सिद्धं साक्षित्वमस्य पुरुषस्य।**
**कैवल्यं माध्यस्थ्यं द्रष्टृत्वमकर्तृभावश्च ॥१९॥**

तस्माच्चेति च: पुरुषस्य बहुत्वेन सह धर्म्मान्तराणि समुच्चिनोति विपर्य्यासादस्मादित्युक्ते त्रैगुण्यविपर्ययादित्यनन्तरोक्तं सम्बध्येत अतस्तन्निरासाय तस्मादित्युक्तम् अनन्तरोक्तं हि सन्निधानादिदमोविषयो विप्रकृष्टश्च तद(१) इति विप्रकृष्टं त्रिगुणमविवेकीत्यादि सम्बध्यते। तस्मात् त्रिगुणादे: (२) यो विपर्य्यास: स पुरुषस्यात्रिगुणत्वं विवेकित्वमविषयत्वमसाधारणत्वं चेतनत्वमप्रसवधर्म्मित्वञ्च। तत्र चेतनत्वेन अविषयत्वेन च साक्षित्वद्रष्टृत्वे दर्शिते चेतनोहि द्रष्टा भवति नाचेतन: साक्षी च दर्शितविषयोभवति यस्मै प्रदर्श्यते विषय: स साक्षी यथाहि लोके अर्थिप्रत्यर्थिनौ विवादविषयं साक्षिणे दर्शयत: एवं प्रकृतिरपि स्वचरितं विषयं पुरुषाय दर्शयतीति पुरुष: साक्षी। नचाचेतनोविषयो वा शक्यो विषयं दर्शयितुमिति चैतन्यादविषयत्वाच्च भवति साक्षी अतएव द्रष्टापि भवति अत्रैगुण्याच्चास्य कैवल्यम् आत्यन्तिको दु:खत्रयाभाव: कैवल्यं

---

(१) तदस्तच्छब्दस्य विषय: प्रतिपाद्यम्। ततश्च कारिकायां तच्छब्दनिर्द्देशात् विप्रकृष्टं दूरस्थ(११स०) कारिकोक्तं त्रिगुणत्वादि परामृश्यत इतिभाव:।

(२) तस्मादित्यत्र विपर्य्यासापेक्षयाऽवधित्वार्थिका पञ्चमीन हेताविति द्योतयन् व्याचष्टे त्रैगुण्यादेर्यो विपर्य्यास इति।

तच्च तस्य स्वाभाविकादेवात्रैगुण्यात्सुखदुःखमोहरहितत्वा-त्सिद्धम् अतएवात्रैगुण्यान्माध्यस्थ्यं सुखी हि सुखेन तृप्यन् दुःखी हि दुःखं द्विषन्न मध्यस्थोभवति तदुभयरहितस्तु मध्यस्थइत्यु-दासीन इति चाख्यायते विवेकित्वादप्रसवधर्मित्वाच्चाक-र्त्तेति(१) सिद्धम् ॥१९॥

स्यादेतत् प्रमाणेन कर्त्तव्यमर्थमवगम्य चेतनोऽहं चिकी-र्षन् करोमीति कृतिचैतन्ययोः सामानाधिकरण्यमनुभवसिद्धं तदेतस्मिन्मते नावकल्पते चेतनस्याकर्तृत्वात्कर्तुश्चाचैतन्यादि-त्यतआह ।

**तस्मात्तत्संयोगादचेतनं चेतनावदिव लिङ्गम् ।**
**गुणकर्तृत्वे च तथा कर्त्तेव भवत्युदासीनः ॥२०॥**

यतश्चैतन्यकर्तृत्वे भिन्नाधिकरणे(२) युक्तितः सिद्धे तस्माद्भ्रा-न्तिरियमित्यर्थः । लिङ्गं(३) महदादि सूक्ष्मपर्य्यन्तं वक्ष्यति भ्रान्तिवीजं तत्संयोगस्तत्सन्निधानम् अतिरोहितार्थमन्यत् ॥२०॥

---

(१) कर्त्ता हि स्वाभीष्टोत्पादाय प्रयतमानोऽविवेकी प्रसवधर्म्मी च भवति तस्य विविक्तत्वान्न कर्त्तृत्वमित्यर्थः । तच्च कर्तृत्वं बुद्ध्याश्रयमपि पुरुषे उपचर्य्यते ।

(२) चैतन्यं प्रकाशकत्वं कर्त्तृत्वञ्च प्रयत्नभेदः, तस्य च रजः, कार्य्यत्व-मेवञ्च रजःकार्य्यस्य सत्वधर्म्मप्रकाशस्य स्वात्मकप्रकाशरूपस्य पुरुषधर्म्मस्य वा रजोनिष्ठत्वाभावेन विभिन्नाश्रयत्वम् ।

(३) लिङ्गम् अव्यक्तानुमापकं कार्य्यस्य कारणानुमापकत्वौचित्यात् ।

तत्संयोगादित्युक्तं नच भिन्नयोः संयोगोऽपेक्षां विना, न चेय(१)मुपकार्य्योपकारकभावं विनेत्यपेक्षाहेतुमुपकारमाह।

**पुरुषस्य दर्शनार्थं कैवल्यार्थं तथा प्रधानस्य।**
**पङ्ग्वन्धवदुभयोरपि संयोगस्तत्कृतः सर्गः॥२१॥**

प्रधानस्येति कर्म्मणि षष्ठी प्रधानस्य(२) सर्व्वकारणस्य यद्दर्शनं पुरुषेण(३) तदर्थं, तदनेन(४) भोग्यता प्रधानस्य दर्शिता ततश्च भोग्यं प्रधानं भोक्तारमन्तरेण न सम्भवतीति युक्तास्य भोक्त्रपेक्षा। पुरुषस्यापेक्षां(५) दर्शयति पुरुषस्य कैवल्यार्थम्। तथा

---

(१) इयम् अपेक्षा।

(२) दर्शनार्थमित्यत्र व्यवहितमपि प्रधानस्येति पदम् योजयन् दर्शनार्थमिति पदं व्याख्यातुमाह प्रधानस्येति।

(३) "उभयोः प्राप्तौ कर्म्मणी"त्यनुशासनमनुसृत्य दर्शनशब्दार्थे कर्तुराकाङ्क्षायां तस्य तृतीयान्तपदोपस्थाप्यतां दर्शयति पुरुषेणेति।

(४) अनेन पुरुषकर्तृकदर्शनविषयत्वेन। अयं भावः। सुखदुःखानुभवो हि भोगः स चानुभवः स्वाश्रयमन्तरेण न सम्भवति अतोऽनुभूयमानत्वान्यथानुपपत्त्या अनुभविता कल्प्यते स चानुभविता न पुरुषादन्यः "चिदवसानोभोग" इति सूत्रकृता भोगस्य चेतनाश्रयत्वस्य प्रतिपादनादिति।

(५) व्यवहितमपि पुरुषस्येति पदं कैवल्यार्थमित्यत्रान्वेतीत्याख्यातुं पुरुषस्यापेक्षामुत्थापयति पुरुषस्यापेक्षामिति प्रकृतेरिति शेषः। कैवल्यं केवलीभावः स च अनुभूयमानस्य बुद्धिधर्म्मस्य दुःखत्रयस्य विनाश एव, तदर्थं तदुद्देशेन पुरुषस्य प्रकृत्यपेक्षा। तथा हि इष्टविषयेच्छया इष्टसाधनाय प्रवर्त्त

हि प्रधानेन सम्भिन्नः पुरुषस्तद्गतं दुःखत्रयं स्वात्मन्यभिमन्यमानः कैवल्यं प्रार्थयते तच्च सत्वपुरुषान्यताख्यातिनिबन्धनम् । न च सत्वपुरुषान्यताख्यातिः प्रधानमन्तरेणेति कैवल्यार्थं पुरुषः प्रधानमपेक्षते । अनादित्वाच्च संयोगगपरम्परायाः, भोगाय संयुक्तोऽपि कैवल्याय पुनः संयुज्यते इति युक्तम् । ननु भवत्वनयोः(१) संयोगोमहदादिसर्गस्तु कुतस्त्य इत्यत आह तत्कृतः(२) सर्गः

---

मानो दृष्टः पुरुषश्च आत्मन्यनुभूयमानं दुःखत्रयं जिहासुस्तत्परिहारसाधनमर्थयते दुःखत्रयाभिघातश्च प्रकृतिपुरुषविवेकाधीन इति प्रकृतिं विना कथङ्कारं पुरुषस्तद्भेदमात्मनि प्रतीयादिति दुःखत्रयाभिघातार्थमपेक्षणीय ज्ञानसाधनत्वेन पुरुषस्य प्रकृत्यपेक्षा ।

(१) अनयोः प्रकृतिपुरुषयोः संयोगः संसर्गः स्वस्वकार्य्यजननाय अन्योन्यापेक्षित्वरूपसंबन्धविशेषः स च प्रकृत्याश्रितोऽपि पुरुषे अतात्त्विकएव अत एव "असङ्गोऽयं पुरुष इति" सूत्रकृता पुरुषस्यासङ्गत्वकथनं सङ्गच्छते । उक्तार्थे दृष्टान्तः पङ्ग्वन्धवदिति यथा गतिशक्तिरहितस्य पङ्गोर्गतिसाधनाय गतिमतोऽन्धस्यापेक्षा, दृष्टिशक्तिरहितस्य चान्धस्य गतिशक्तिसत्त्वेऽपि स्वाभीष्टदेशगमनं दर्शकमन्तरेण न सम्भवति तथा च यथा स्वस्वकार्य्याय तयोरन्योन्यापेक्षा तथा क्रियारहितस्य पुरुषस्य सक्रियप्रधानस्यापेक्षा दृष्टिशक्तिरहितस्य च प्रधानस्य दृष्टिशक्तियुक्तपुरुषस्यापेक्षेत्यत उभाभ्यामन्योन्यमपेक्ष्य स्वस्वकार्य्यं निष्पाद्यते इत्यर्थः ।

(२) तत्कृतः प्रकृतिपुरुषसंबन्धकृतः सर्गः सृष्टिः "सदभिहितोभावो द्रव्यवत् प्रकाशते" इत्युक्तेः सृज्यमानमहदादिरेव वा सर्गशब्देनोच्यते ।

संयोगो हि न महदादिसर्गमन्तरेण भोगाय पर्य्याप्त(१) इति संयोगएव भोगापवर्गार्थं सर्गं करोतीत्यर्थः ॥२१॥

सर्गक्रममाह(२)।

**प्रकृते(३)र्महांस्ततोऽहङ्कारस्तस्माद्गणश्च षोड़शकः।
तस्मादपि षोड़शकात्पञ्चभ्यः पञ्च भूतानि ॥२२॥**

प्रकृतिरव्यक्तं(३) महदहङ्कारौ वक्ष्यमाणलक्षणौ एकादशेन्द्रियाणि(४)वक्ष्यमाणानि(२६।२७का०)पञ्च तन्मात्राणि च सोऽयं षोड़शसंख्यापरिमितोगणः षोड़शकः तस्मादपि षोड़शकाद (५)

---

(१) पर्य्याप्तः समर्थः।

(२) प्रकृतिपुरुषसंयोगाधीनस्य महदादेर्भोगापवर्गार्थमपेक्षणीयत्वेऽपि किं युगपदेव तेषामुत्पत्तिराहोस्विदस्ति काचित् परिपाटीत्याशङ्क्य परिपाट्यैव तेषामुत्पत्तिरित्याख्यातं कारिकामवतारयति सर्गक्रममाहेति।

(३) प्रकृतिपुरुषसंयोगस्य महदादीनां निमित्तत्वेऽपि उपादानमन्तरेण कार्य्योत्पत्तेरसम्भवात् पुरुषस्य चापरिणामित्वात् तात्त्विसङ्गरहितत्वाच्च न कार्य्योपादनत्वमतोऽव्यक्तमेव महदादेरुपादानं, यथा च तस्योपादनत्वं तथाऽग्रे वक्ष्यते इत्येवं मनसि निधाय.ह कारिकायां प्रकृतेरिति तस्य च। जायते इत्यत्यग्रेऽध्याहर्त्तव्येनान्वयः "जनिकर्त्तुः प्रकृतिरिति" पञ्चम्याः अपादनत्वमर्थः।

(४) षोड़शकपदं व्याख्यातं तदवान्तरसंख्यावोधनायाह एकादशेन्द्रियाणीति।

(५) प्रकृतेरित्यत्रेव षोड़शकादित्यत्र नोपादनत्वलक्षणा पञ्चमी पञ्चानां भूतानां षोड़शकगणप्रकृतिकत्वाभावात्। किन्तु अपेक्षितक्रियापादानत्व लक्षणा पञ्चमीति द्योतयन् अपेक्षितक्रियाम.ह अपकृष्टेभ्यइति अपकृष्टत्वञ्चैषां

प्रकृष्टेभ्यः पञ्चभ्यस्तन्मात्रेभ्यः पञ्च भूतान्याकाशादीनि। तत्र शब्दतन्मात्रादाकाशं शब्दगुणं, शब्दतन्मात्रसहितात् स्पर्शतन्मात्राद्वायुः शब्दस्पर्शगुणः, शब्दस्पर्शतन्मात्रसहिताद्रूपतन्मात्रात्तेजः, शब्दस्पर्शरूपगुणं, शब्दस्पर्शरूपतन्मात्रसहिताद्रसतन्मात्रादापः शब्दस्पर्शरूपरसगुणाः शब्दस्पर्शरूपरसतन्मात्रसहिताद्गन्धतन्मात्राच्छब्दस्पर्शरूपरसगन्धगुणा पृथिवी जायते (१) इत्यर्थः॥ २२॥

अव्यक्तं सामान्यतोलक्षितं "तद्विपरीत" मित्यनेन (१०का०) विशेषतस्च "सत्त्वं लघु प्रकाशक" मित्यादिना (१३का०) व्यक्तमपि सामान्यतोलक्षितं "हेतुमदित्यादिना" (१०का०) सम्प्रति- विवेकज्ञानोपयोगितया व्यक्तविशेषं बुद्धिं लक्षयति।

---

तमोगुणप्रधानत्रिगुणकार्य्यत्वात्। अयं भावः। "सत्त्वरजस्तमसां साम्यावस्था प्रकृतिः प्रकृतेर्महान् महतोऽहङ्कारः अहङ्कारात् पञ्च तन्मात्राणि उभयमिन्द्रियं, तन्मात्रेभ्यः स्थूलभूतानीति" सूत्रकृता पञ्चभ्यस्तन्मात्रेभ्यएव स्थूलभूतानामुत्पत्तेः कथनात्तदेकवाक्यतयात्रापि पञ्चतन्मात्राणामेव स्थूलभूतोपादानत्वम्। अहङ्कारस्य षोड़शगणोपादानत्वन्तु "मयानेनेन्द्रियेण रूपादिकं भोक्तव्यमिदमेव सुखसाधन"मित्याभिमानादेव ज्ञानकर्म्मेन्द्रिय तद्विषयरूपादीनामुत्पत्तेः। अतस्तदभिमानाश्रयभूतमन्तःकरणं द्रव्यं कल्प्यते सएवाहङ्कारः। अतएव "एकादश पञ्चतन्मात्रं तत्कार्य्यमिति" सूत्रेण षोड़शानामहङ्कारकार्य्यत्वमुक्तम्।

(१) प्रकृतेरित्यादौ श्रुतपञ्चम्याक्षिप्तां समर्थां क्रियां दर्शयति जायते इति।

**अध्यवसायोबुद्धिर्धर्म्मोज्ञानं विरागऐश्वर्यम्।**
**सात्विकमेतद्रूपं तामसमस्माद्विपर्य्यस्तम् ॥२३॥**

अध्यवसायोबुद्धिः क्रियाक्रियावतोरभेदविवक्षया। सर्वोव्यवहर्त्ता आलोच्य मत्वाऽहमत्राधिकृतइत्यभिमत्य कर्त्तव्यमेतन्मयेति अध्यवस्यति ततश्च प्रवर्त्तते इति लोकप्रसिद्धम्। तत्र योऽयं कर्त्तव्यमिति विनिश्चयश्चिति(१) सन्निधानादापन्नचैतन्याया बुद्धेः, सोऽध्यवसायो बुद्धेरसाधारणोव्यापारस्तदभेदा बुद्धिः स च बुद्धेर्लक्षणं समानासमानजातीयव्यवच्छेदकत्वात्। तदेवं बुद्धिं लक्षयित्वा विवेकज्ञानोपयोगिनस्तस्या धर्म्मान् सात्विक राजस(२) तामसानाह धर्म्मोज्ञानं विराग ऐश्वर्य्यं सात्विकमेतद्रूपं तामसमस्माद्विपर्य्यस्तम्। धर्म्मो(३) ऽभ्युदयनिःश्रेयस-

(१) प्रकृतेर्जडत्वेन तत्कार्य्यबुद्धेः कथं विनिश्चय इत्याशङ्क्य जवासन्निधाने जवागतलौहित्यस्य स्फटिकादौ सम्भेदइव चेतनसंयुक्त बुद्धेस्तदध्यासइति द्योतयन्नाह चितिसन्निधानादित्यादि आपन्नमारोपितं चैतन्यं यस्याम् तथाभूतायाः "उपरागात् कर्तृत्वं चित्सान्निध्या'दिति" सूत्रकृता चेतनसन्निधानादेव बुद्ध्यादेः कर्तृत्वादिचेतनधर्म्माणामुक्तेश्चेतनोपरागादेव तथा विनिश्चयादिसम्भवइत्यर्थः।

(२) राजसेत्युक्तिः सर्व्वेषां सात्विकतामसधर्म्माणां रजःप्रयोज्यत्वमन्तरेणासम्भवात् तयोः स्वस्वकार्य्यजननाय रजःसहकारित्वाभिधानाय अतएव सात्विकतामसधर्मवत् राजसधर्म्माणां विशेषतोऽकथनं द्रष्टव्यम्।

(३) आश्रितत्वरूपधर्म्मस्य धर्म्मिमात्रसाधारणतयातिप्रसङ्गात् धर्म्मशब्दार्थो योऽत्र विवक्षितस्तमाह धर्म्मइति तथा च।

हेतुः तत्र यागदानाद्यनुष्ठानजनितोधर्म्मोऽभ्युदयहेतुः(१) अष्टाङ्ग योगानुष्ठानजनितश्च निःश्रेयसहेतुः(२)। सत्वपुरुषान्यताख्याति(३)र्ज्ञानम्। वैराग्यं रागाभावः। तस्य यतमानसंज्ञा, व्यतिरेकसंज्ञा, एकेन्द्रियसंज्ञा, वशीकारसंज्ञेति, चतस्रः संज्ञाः। रागादयः(४) कषायाश्चित्तवर्त्तिनस्तैरिन्द्रियाणि यथास्वं विषयेषु प्रवर्त्त्यन्ते तन्माऽत्र प्रवर्त्तिषत(५) विषयेष्विन्द्रियाणीति, तत्परि

"विद्वद्भिः सेवितः सद्भिर्नित्यमद्वेषरागिभिः
हृदयेनाभ्यनुज्ञातो यो धर्म्मस्तम् निबोधतेत्यादिना
मन्वादिभिः परिभाषित एव धर्म्मोऽत्र ग्राह्यः नाश्रितत्वमात्र" इतिभावः।

(१) अभ्युदयः समृद्धिः स्वराज्यादिलाभस्तद्धेतुरदृष्टविशेषः।

(२) निश्चितं श्रेयः निःश्रेयसं कैवल्यं तस्य हेतुः।

(३)अर्थप्रकाशनरूपस्य ज्ञानमात्रधर्मस्य सत्वगुणधर्म्मत्वेऽपि शब्दादिविषय ज्ञानादेः रागहेतुकत्वात् तस्य रजःसहकृततत्तदर्थप्रकाशकत्वेन राजसत्वमपि कथञ्चित्सम्भवतीत्यतः असाधारणज्ञानमेवात्र सत्वधर्म्मतया विवक्षितमित्याह सत्वपुरुषान्यतेत्यादि।

(४) रागः अभिलाषः विषयलाभेच्छाविशेषः आदिपदेन अद्वेषादयः तेषाञ्च चित्ते वासनाधायकत्वेन रञ्जकत्वेन माञ्जिष्ठादिकषायतुल्यत्वात् कषायत्वम्। तैर्हि स्वस्वविषयेषु इन्द्रियाणि प्रवर्त्त्यन्ते स्वस्वविषयदर्शनयोग्यानि क्रियन्ते। तथा हि आदौ विषयेषु रागोद्वेषाभावो वा, ततस्तल्लाभाय प्रयत्नः इन्द्रियादिभिरेव च सुखादिभोगसम्भवेन ततः इन्द्रियादीनां विषयेषु प्रवर्त्तन मित्यतो रागादेः क्रमशः इन्द्रियप्रवर्त्तकता।

(५) तत् तस्मात् तत्प्रेरणादित्यर्थः इन्द्रियाणि अत्र एषु स्वस्वविषयेषु मा प्रवर्त्तिषत प्रवृत्तानि मा भवेयुरिति तस्य उद्वृत्तस्य रागस्य यो निवारण प्रयत्नभेदः स एव यतमानसंज्ञं वैराग्यं न तु रागाभावमात्रम्। तस्य च

पाचनायारम्भः प्रयत्नो यतमानसंज्ञा। परिपाचने चानुष्ठीयमाने केचित्कषायाः पक्काः, पच्यन्ते च केचित्, तत्रैवं पूर्व्वापरीभावे सति पच्यमानेभ्यः कषायेभ्यः पक्कानां व्यतिरेकेणावधारणं(१) व्यतिरेकसंज्ञा। इन्द्रियप्रवृत्त्यसमर्थतया(२) पक्कानामौत्सुक्य मात्रेण मनसि चानवस्थापनमेकेन्द्रियसंज्ञा। औत्सुक्यमात्रस्यापि निवृत्ति(३)रुपस्थितेष्वपि(४)दृष्टानुश्रविकविषयेषु या संज्ञात्रयात्परचीना सा वशीकारसंज्ञा। यामत्रभवान् पतञ्जलिर्व्वर्णयाञ्चकार "दृष्टानुश्रविकविषयवितृष्णस्य वशीकारसंज्ञा वैराग्य" मिति। सोऽयं बुद्धिधर्म्मो विरागइति। ऐश्वर्य्यमपि बुद्धि-

---

(१)रागाभावस्य न रजःकार्य्यत्वं किन्तु सत्वकार्य्यत्वमित्यर्थः। इमे पक्काः उपशमिताः, इमे पच्यमानाः उपशमयितव्या इत्येवं व्यतिरेकेण भेदेनावधारणं निश्चयः निश्चयार्थं प्रयत्नभेदः तस्य च राजसत्वेऽपि सत्वप्रधाननिश्चयकार्य्यत्वात् सात्विकत्वमुपेयम्।

(२) विषयेषु रागादिषु सत्स्वपि तद्विषयलाभाय इन्द्रियाणां प्रवृत्तौ व्यापारे असमर्थतया यथास्वर्गसुखरागे सत्यपि असामर्थ्यात् तत्र इन्द्रियव्यापाराभावः। पक्कानां उपशमितानामपि कषायाणामिति शेषः। औत्सुक्यमात्रेण उत्कण्ठापूर्व्वकस्मरणेन मनसि अनवस्थापनम् ततोऽपसारणं दूरीकरणमित्यर्थः। तदुपयोगी प्रयत्नभेदः एकेन्द्रियसंज्ञा।

(३) वशीकरसंज्ञां व्याकरोति औत्सुक्यमात्रस्यापि निवृत्तिः निवारणप्रयत्नभेदइत्यर्थः।

(४) उपस्थितेषु इन्द्रियादिसन्निकृष्टेषु दृष्टानुश्रविकेषु लौकिकेषु पारलौकिकेषु च पराचीना परतरा भिन्नेत्यर्थः।

धर्म्मो यतोऽणिमादि(१) प्रादुर्भाव:। तत्राणिमा अणुभाव: यत: शिलामपि प्रविशति। लघिमा लघुभाव: यत: सूर्य्यमरीची-नालम्ब्य सूर्य्यलोकं याति महिमा महतोभाव: यतोमहान् संभवति। प्राप्तिरङ्गुल्यग्रेण स्पृशति चन्द्रम्। प्राकाम्यमिच्छा-नभिघातो यतोभूमावुन्मज्जति निमज्जति यथोदके। वशित्वं भूतभौतिकं वशीभवत्यस्यावश्यम्। ईशित्वं भूतभौतिकानां प्रभ-वस्थितिमीष्टे। यच्च कामावसायित्वं(२) सा सत्यसङ्कल्पता यथास्य सङ्कल्पो भवति भूतेषु तथैव भूतानि भवन्ति। अन्येषां (३) निश्चया निश्चेतव्यमनुविधीयन्ते योगिनस्तु निश्चेतव्या: पदार्था निश्चय(४) मिति, चत्वार: सात्विका बुद्धिधर्म्मा:। तामसास्तु तद्विपरीता बुद्धिधर्म्मा: अधर्म्माज्ञानावैराग्यानैश्वर्य्याभिधाना श्चत्वार इत्यर्थ: ॥ २३ ॥

अहङ्कारस्य लक्षणमाह।

---

(१) अणिमादीत्यादिपदव्याख्यान् स्वयमेव सलक्षणात् पदार्थान् दर्श-यति तत्राणिमेत्यादि।

(२) कामान् संकल्पान् तदनुसारेण अवस्यति निश्चिनोति पदार्थान् शिनि: तस्य भाव:। सङ्कल्पानुसारेणैव पदार्थान् अध्यवस्यति न तु पदार्थानुसारेण तस्य सङ्कल्प इत्येवमर्थपरतां कामावसायिताशब्दस्य मनसिनिधायाह सत्यसङ्कल्पतेति।

(३) तदेवोपपादयति अन्येषा मिति।

(४) निश्चयमित्यत्रानुविधीयन्ते इत्यनुषङ्ग:।

**अभिमानोऽहङ्कारस्तस्मात् द्विविधः प्रवर्त्तते सर्गः।**
**एकादशकश्च गणस्तन्मात्रपञ्चकश्चैव॥ २४॥**

अभिमानोऽहङ्कारः यत् खल्वालोचितं, मतञ्च तत्राहमधिकृतः, शक्तः खल्वहमत्र, मदर्था एवामी विषयाः, मत्तोनान्योऽत्राधिकृतः कश्चिदस्त्यतो(१)ऽहमस्मीति योऽभिमानः(२)सोऽसाधारणव्यापारत्वादहङ्कारः तमुपजीव्य हि बुद्धिरध्यवस्यति "कर्त्तव्यमेतन्मयेति"। तस्य कार्य्यभेदमाह तस्मात् द्विविधः प्रवर्त्तते सर्गः। प्रकारद्वयमाह एकादशकश्च गणः इन्द्रियाख्यः तन्मात्रपञ्चकश्चैव द्विविधएव सर्गो ऽहङ्कारात् न त्वन्यदित्येवकारेणावधार्यते॥ २४॥

स्यादेतत् अहङ्कारादेकरूपात्(३) कारणात्कथं जड़प्रकाशकौ(४) गणौ विलक्षणौ भवत इत्यत आह।

---

(१) अतोऽहमत्रास्मि त्यत्राधिकृतः शक्त इत्यनुषङ्गः।

(२) इति इत्येवं प्रकारो योऽभिमानः स नभेदः।

(३) एकस्मादहङ्कारात् प्रकाशकप्रकाश्यरूपद्विविधकार्य्यासम्भवः। शङ्का अहङ्कारकारणस्य गुणत्रयस्य सहकारिताभेदात्कार्य्यभेदः स्यादित्याशयवान् कारिकामवतारयितुं शङ्कते अहङ्कारादेकरूपादित्यादि।

(४) जड़त्वं दृश्यत्वरूपं प्रकाश्यत्वं, प्रकाशकत्वं स्वस्ववृत्त्या विषयावभासकत्वम्

**सात्विकएकादशकः प्रवर्त्तते वैकृतादहङ्कारात्।**
**भूतादेस्तन्मात्रः स तामसस्तैजसादुभयम् ॥ २५ ॥**

प्रकाशलाघवाभ्या(१)मेकादशक इन्द्रियगणः सात्विकोवैकृता-त्सात्विकादहङ्कारात् प्रवर्त्तते। भूतादेश्वहङ्कारात्तामसात्तन्मात्रोगणः प्रवर्त्तते कस्मात् यतः स तामसः। एतदुक्तं भवति यद्यप्येकोऽहङ्कारस्तथापि गुणभेदाद्भवाभिभवाभ्यां(२) भिन्नं कार्य्यं करोतीति। ननु यदि सत्वतमोभ्यामेव सर्व्वं कार्य्यं जन्यते तदा कृतमकिञ्चित्करेण रजसेत्यतआह तैजसादुभयं तैजसात्(३) राजसादुभयं गणद्वयं भवति। यद्यपि रजसोन का-

---

तत्त्व यद्यपि बुद्धिधर्म्मस्तथापि इन्द्रियाणां तत्सहकारित्वात् तथात्वमिति-भावः। तथा च दृश्यत्वदर्शनकारणत्वयोरेकत्रासम्भवेन कथमेकविधकारणात् तत्सम्भवइत्याशङ्कार्थः।

(१) एकादशकगणस्य सात्विकत्वमुपपादयितुमाह प्रकाशलाघवाभ्यामिति "सत्वं लघु प्रकाशक"मिति (१३सं) कारिकया प्रकाशस्य लाघवस्य च सत्वधर्म्मत्वोक्तेः इन्द्रियाणाञ्च प्रकाशकत्वात् लाघवाच्च सत्वकार्य्यत्वं निश्चितं तथा च सात्विकादेवाहङ्कारात् तस्योत्पत्तिर्युक्ता। वैकृतात् विकृतमेव वैकृतन्तस्मादित्यर्थः

(२) भवः कार्य्यक्षमता अभिभवः स्वकार्य्यजनने गुणान्तरेण प्रतिरोधः ताभ्याम्।

(३) तिज निशाने इत्यस्मादसिः तेन तेजसा कृतः तैजसः। रजसश्च सत्वतमसोः स्वस्वकार्य्यसमर्थत्वकरणरूपतैक्ष्णकरणगुणयोगात् तेजःपदाभिधेयता।

र्थान्तरमस्ति तथापि सत्वतमसी स्वयमक्रिये समर्थे अपि न स्वस्वकार्य्यं कुरुतः रजस्तु चलतया ते यदा चालयति तदा स्वस्वकार्य्यं कुरुतइति तदुभयस्मिन्नपि कार्य्ये सत्वतमसोः क्रियोत्पादनद्वारेणास्ति रजसः कारणत्वमिति न व्यर्थं रज इति ॥ २५ ॥

**बुद्धीन्द्रियाणि चक्षुः श्रोत्रघ्राणरसनत्वगाख्यानि ।**
**वाक्पाणिपादपायूपस्थानि कर्म्मेन्द्रियाण्याहुः॥ २६॥**

सात्विकाहङ्कारोपादानकमिन्द्रियं तच्च द्विविधं बुद्धीन्द्रियं(१) कर्म्मेन्द्रियञ्च उभयमप्येतदिन्द्रस्यात्मनश्चिह्नत्वादिन्द्रियमुच्यते(२)। तानि च स्वसंज्ञाभिश्चक्षुरादिभिरुक्तानि तत्र रूपग्रहण-लिङ्गं(३) चक्षुः, शब्दग्रहणलिङ्गं श्रोत्रं, गन्धग्रहणलिङ्गं घ्राणं,

(१) इन्द्रियाणां प्रकाशकत्वेन प्रकाशधर्मकसत्वगुणकार्य्यत्वानुमानात् सात्विकाहङ्कारोपादानकत्वमेव पूर्व्वकारिकायामुक्तम् तत्र कानि पुनस्तानीन्द्रियाणीत्याह बुद्धीन्द्रियाणीति। बुद्धिसाधनानि इन्द्रियाणि बुद्धीन्द्रियाणि कर्मसाधनानीन्द्रियाणि कर्म्मेन्द्रियाणि। शाकपार्थिवादिसमासः।

(२) तेषामिन्द्रियशब्दार्थत्वे कारणमाह इन्द्रस्यात्मनइति। "इन्द्रोमायाभिः पुरुरूपईयते इत्यादि" श्रुतौ इन्द्रशब्दस्यात्मार्थकत्वदर्शनात्, पाणिना इन्द्रियमिन्द्रलिङ्ग" मित्यादिना (५। २। ९३सू०) इन्द्रशब्दात् तल्लिङ्गाद्यर्थे घप्रत्ययेन निपातितत्वाच्च तथात्वम्। करणव्यापारः कर्त्तृव्यापाराधीनः करणव्यापारत्वात् कुठारादिव्यापारवदिति करणव्यापारेण कर्त्तुरनुमानात् इन्द्रियादीनां पुरुषलिङ्गत्वम्।

(३) गृह्यतेऽनेन ग्रहणं रूपस्य ज्ञानसाधनं यल्लिङ्गमिन्द्रियं तच्चक्षुः। एव मुत्तरत्र।

रसग्रहणलिङ्गं रसनं, स्पर्शग्रहणलिङ्गं त्वक्, वागादीनां कार्य्यं वक्ष्यति (२८सं का०) ॥ २६ ॥

एकादशक(१)मिन्द्रियमाह।

**उभयात्मकमत्र मनः सङ्कल्पकमिन्द्रियञ्च साधर्म्यात्।**
**गुणपरिणामविशेषान्नानात्वं बाह्यभेदाश्च ॥ २७॥**

एकादशस्विन्द्रियेषु(२)मध्ये मनउभयात्मकं बुद्धीन्द्रियं कर्म्मेन्द्रियञ्च चक्षुरादीनां वागादीनाञ्च मनोऽधिष्ठितानामेव स्वस्वविषयेषु प्रवृत्तेः तत् असाधारणेन रूपेण(३)लक्षयति सङ्कल्पकं मनइति सङ्कल्पेन रूपेण मनो लक्ष्यते आलोचितमिन्द्रियेण वस्त्विदमिति सम्मुग्धमिदमेवं नैवमिति सम्यक् कल्पयति विशेषणविशेष्यभावेन विवेचयतीति यावत्। यदाहुः

---

(१) एकादशानां पूरणमेकादशं डट् ततः स्वार्थे कन्। एकादशपूरणीभूतमित्यर्थः।

(२) कारिकास्थमत्रेतिपदं व्याख्यातुमाह एकादशस्विति तथा च अत्रेति निर्द्धारणे सप्तमी तदेवद्योतयन्नाह मध्ये इति।

(३) असाधारणेन इतरव्यावृत्तेन रूपेण, अधिष्ठानद्वारा इन्द्रियप्रवर्त्तकत्वेनेत्यर्थः लक्षयति संकल्पकं मनोऽनुमापयति तथाच इन्द्रियप्रवृत्त्यन्यथानुपपत्त्या मनः कल्प्यते इत्यर्थः। मनसोऽसाधारणकार्य्यमाह संकल्पकमिति। लक्ष्यते अनुमीयते इत्यर्थः।

सम्मुग्धं(१)वस्तुमात्रन्तु प्राक् गृह्णन्त्यविकल्पितम्।
तत्सामान्यविशेषाभ्यां कल्पयन्ति मनीषिणः॥
तथाहि अस्ति ह्यालोचनज्ञानं प्रथमं निर्विकल्पकम्।
बालमूकादिविज्ञानसदृशं मुग्धवस्तुजमिति(२)॥
ततः परं पुनर्वस्तुधर्मैर्जात्यादिभिर्यया(३)।
बुद्ध्यावसीयते सा हि प्रत्यक्षत्वेन सम्मता॥

सोऽयं सङ्कल्पलक्षणोव्यापारोमनसः समानासमानजातीयाभ्यां(४) व्यवच्छिन्दन् मनोलक्षयति। स्यादेतत् असाधारणव्यापारयोगिनौ यथा महदहङ्कारौ नेन्द्रियमेवं मनोऽप्यसाधारणव्यापारयोगि नेन्द्रियं भवितुमर्हतीत्यत आह इन्द्रियञ्च। कुतः साधर्म्यात् इन्द्रियान्तरैः, सात्त्विकाहङ्कारोपादानत्वञ्च साधर्म्यं न त्विन्द्रलिङ्गत्वं महदहङ्कारयोरप्या-

---

(१)संमुग्धं संदिग्धमिदमित्थं न वेत्याकारम्। अविकल्पितम् विशेष्यविशेषणभावनिर्मुक्ततया गृह्णन्ति विषयीकुर्वन्तीत्यर्थः।

(२) मुग्धवस्तुजमिति प्रत्यक्षे विषयस्य हेतुत्वात् सन्दिग्धवस्तुजन्यत्वम् ज्ञानस्य।

(३) यया बुद्ध्या जात्यादिभिर्विशेषणैर्विशिष्टतया वस्तु अवसीयते निश्चीयते सा बुद्धिः प्रत्यक्षत्वेन सम्मता। एतन्मते बुद्धिवृत्तिरेव ज्ञानं फलन्तु तद्वृत्तिप्रतिविम्बितचैतन्यं पौरुषेयमिति विशेषः।

(४) समानजातीयात् अनुमित्यादिज्ञानात् असमानजातीयात् घटादितः व्यवच्छिन्दन् व्यावर्त्तयन् संकल्पः मनो लक्षयति अनुमापयति।

त्वलिङ्गत्वेनेन्द्रियत्वप्रसङ्गात् । तस्माद् व्युत्पत्तिमात्रमिन्द्रलिङ्गत्वं न तु प्रवृत्तिनिमित्तम् । अथ कथं सात्त्विकाहङ्कारादेकस्मादेकादशेन्द्रियाणीत्यतआह गुणपरिणामविशेषान्नानात्वं वाह्यभेदाश्च । शब्दाद्युपभोगसम्प्रवर्त्तकादृष्टसहकारिभेदात्कार्य्यभेदः अदृष्टभेदोऽपि गुणपरिणामएव । वाह्यभेदाश्चेति दृष्टान्तार्थम् यथा वाह्यभेदास्तथैतदपीत्यर्थः ॥२७॥

तदेवमेकादशेन्द्रियाणि स्वरूपत उक्त्वा दशानामसाधरणी वृत्तीराह ।

**शब्दादिषु पञ्चानामालोचनमात्रमिष्यते वृत्तिः(२) । वचनादानविहरणोत्सर्गानन्दाश्च पञ्चानाम्(३) ॥२८॥**

बुद्धीन्द्रियाणां सम्मुग्धवस्तुमात्रदर्शनमालोचनमुक्तं कर्म्मे-

---

(१) व्युत्पत्तिर्योगार्थः "इन्द्रियमिन्द्रलिङ्ग"मित्यादि (५,२,९३सू०)पाणिनेरनुशासनात् तन्मात्रमिन्द्रलिङ्गत्वं न पाचकादिवत् शब्दप्रवृत्तौ तन्त्रमितिशेषः अपि तु पङ्कजादिशब्दवत् सात्त्विकाहङ्कारोपादानत्वविशिष्टमिन्द्रलिङ्गत्वमेव तन्त्रम् । प्रवृत्तिनिमित्तं शक्यतावच्छेदकमित्यर्थः । तेन महदहङ्कारयोरिन्द्रशब्दार्थपुरुषलिङ्गत्वेऽपि सात्त्विकाहङ्कारोपादानत्वाभावान्नेन्द्रियशब्दवाच्यता ।

(२) वृत्तिः व्यापारः कार्य्यमित्यर्थः ।

(३) पञ्चानां वाक्पाणिपादपायूपस्थानां कर्म्मेन्द्रियाणाम्, क्रमेण वचनादयः वृत्तय इति विभक्तिविपरिणामः ।

न्द्रियाणां कण्ठताल्वादिस्थानमिन्द्रियं (१) वाक् तस्या वृत्ति-र्वचनं(२) स्पष्टमन्यत् ॥२८॥

अन्तःकरणत्रयस्य वृत्तिमाह।

**स्वालक्षण्यं वृत्तिस्त्रयस्य सैषा भवत्यसामान्या।**
**सामान्यकरणवृत्तिः प्राणाद्या वायवः पञ्च ॥२९॥**

स्वालक्षण्यं वृत्तिस्त्रयस्य, स्वमसाधारणं लक्षणं येषां तानि स्वलक्षणानि महदहङ्कारमनांसि तेषां भावः स्वालक्षण्यं तच्च स्वानि स्वानि लक्षणान्येव तद्यथा महतोऽध्यवसायोऽहङ्कार-स्याभिमानः सङ्कल्पो मनसो वृत्तिर्व्यापारः। वृत्तिद्वैविध्यं साधारणासाधारणत्वाभ्यामाह सैषा भवत्यसामान्या असाधा-रणी। सामान्यकरणवृत्तिः प्राणाद्या(३)वायवः पञ्च। सामान्या

---

(१) नयनगोलकादेः नेत्रादिस्थानत्वस्येव वागिन्द्रियस्यानियतस्थानत्वा-दाह कण्ठताल्वादीति। आदिपदात् "अष्टौ स्थानानि वर्णानामुरः कण्ठः शिरस्तथा। जिह्वामूलं च दन्तौष्ठं नासिका चैव तालु चेत्युक्ता" न्यष्टौ स्थानानि ग्राह्याणि। तानि स्थानानि स्वकार्यनिष्पादनाधिकरणानि यस्य।

(२) एवं वागिन्द्रियस्य स्थानमुक्त्वा लक्षणकथनाय तद्वृत्तिमाह तस्या वृत्ति-र्वचनमिति। तथा च वचनसाधनमिन्द्रियं वाक्। एवम् आदानसाधनमिन्द्रियं पाणिरित्यादि लक्षणम्। कारिकायां विहरणं चलनं गतिभेदः। उत्सर्गः उद-र.द् मलस्यापसारणेन त्यागः। आनन्दः आनन्दविशेषजनको रमणीसंभोगा-त्मको व्यापारभेदः।

(३) "एतस्माज्जायते प्राणोमनः सर्व्वेन्द्रियाणि च। खं वायुर्ज्योति रापश्च पृथिवी विश्वस्य धारिणीति" श्रुतौ वायुतः प्राणस्य पृथक्कीर्त्तनात्

चासौ करणवृत्तिश्चेति त्रयाणामपि करणानां पञ्च वायवः जीवनं वृत्तिः तद्भावे भावात् तदभावे चाभावात्। तत्र प्राणो नासाग्रहृन्नाभिपादाङ्गुष्ठवृत्तिः। अपानः कृकाटिकापृष्ठपादपायूपस्थपार्श्ववृत्तिः। समानोहृन्नाभिसर्व्वसन्धिवृत्तिः। उदानो हृत्कण्ठतालुमूर्द्ध भ्रूमध्यवृत्तिः। व्यानस्त्वग्वृत्तिरिति पञ्च वायवः।

अस्यासाधारणीषु वृत्तिषु क्रमाक्रमौ सप्रकारावाह।

**युगपच्चतुष्टयस्य(१)तु वृत्तिः क्रमशश्च तस्य निर्द्दिष्टा। दृष्टे तथाप्यदृष्टे त्रयस्य तत्पूर्व्विका वृत्तिः॥३०॥**

दृष्टे यथा यदा सन्तमसान्धकारे विद्युत्सम्पातमात्राद्व्याघ्रमभिमुखमतिसन्निहितं पश्यति तदा खल्वस्यालोचनसङ्क-

---

प्राणानां न वायुपरिणामविशेषत्वम्, किन्तु संहतविहगानां पञ्जरचालनन्यायेन बुद्ध्यादिभिः स्वस्ववृत्तिरजोगुणेन शरीरं सर्वदा चाल्यते तच्चालनरूपव्यापार एव प्राणादय इत्याशयेनाह प्राणाद्याइति परामिमतानां पञ्चानां वायूनां भेदाः न प्राणादयः अपि तु बुद्ध्यादिभि र्देहस्य चालनमेव प्राणादयः इत्यर्थः तया च वायुतुल्यसञ्चारवत्त्वेन वायुरूपदेवताधिष्ठित तया वा प्राणादीनां वायुशब्दवाच्यत्वम्।

(१) चतुष्टयस्य इन्द्रियसङ्कृतमनसः, केवलमनसः, अहङ्कारस्य, बुद्धेश्चेति चतुःसङ्ख्यकस्य वृत्तिः वृत्तय इत्यर्थः। तेषां च क्रमेण चतुर्णामालोचन संकल्पाभिमानाध्यवसायाः चतस्रोवृत्तयः।

स्याभिमानाध्यवसाया युगपदेव(१)प्रादुर्भवन्ति, यतस्तत उत्पत्य तत्स्थानादेकपदे(२)ऽपसरति,क्रमशश्च(३)यदा मन्दालोके प्रथमं तावद्वस्तुमात्रं सम्मुग्धमालोचयति अथ प्रणिहितमनाः कर्णान्ताकृष्टसशरः कुञ्चितपदः शिञ्जितज्यामण्डलीकृतकोदण्डः प्रचण्डतरः पाटच्चरो(४)ऽयमिति निश्चिनोति अथ च मां प्रत्येतीत्यभिमन्यते अथाध्यवस्यति अपसरामीतः स्थानादिति। परोक्षे तु(५) अन्तःकरणत्रयस्य वाह्येन्द्रियवर्ज्जं(६) वृत्तिरित्याह अदृष्टे त्रयस्य तत्पूर्विका वृत्तिः। अन्तःकरणत्रयस्य युगपत् क्रमेण च वृत्तिर्दृष्टपूर्विकेति। अनुमानागमस्मृतयोहि परोक्षेऽर्थे दर्शनपूर्व्वाः प्रवर्त्तन्ते नान्यथा। यथा दृष्टे तथा, अदृष्टेऽपीति योजना ॥३०॥

---

(१) "क्रमशश्चाक्रमशश्चेन्द्रिय"वृत्तिरिति सूत्रकृता इन्द्रियवृत्तीनां पराभिमतक्रमिकत्वमात्रखण्डनेन युगपत्त्वमुक्तं तदेवेह प्रदर्श्यते युगपदिति युगपत्त्वकथनेन"अयौगपद्यं ज्ञानानां तस्याणुत्वमिहेष्यते"इति पराभिमतमणुत्वमन्तःकरणस्य निरासितमिति द्रष्टव्यम्।

(२) एकपदे सहसा हठादित्यर्थः।

(३) युगपद्वृत्तिस्थलमुदाहृत्य क्रमशोवृत्तिस्थलमुदाहरति क्रमशश्चेति।

(४) पाटच्चरश्चौरः।

(५) एवमपरोक्षे वृत्तिचतुष्टयं प्रदर्श्य परोक्षे इन्द्रियवृत्तिव्यापारालोचनाभावात् वृत्तित्रयमाह परोक्षे त्विति।

(६) कारिकास्थं त्रयस्येति पदं व्याख्यातुमाह वाह्येन्द्रियवर्जमिति त्रयस्य वाह्येन्द्रियासहकृतस्य मनोऽहङ्कारबुद्धिरूपत्रितयस्येत्यर्थः

स्यादेतत् (१) चतुर्णां त्रयाणां (२) वा वृत्तयो न तावत्तन्मात्राधीनाः तेषां सदातनत्वेन वृत्तीनां सदोत्पादप्रसङ्गात्-आकस्मिकत्वे तु वृत्तिसङ्करप्रसङ्गोनियमहेतोरभावादित्यत आह।

**स्वां स्वां प्रतिपद्यन्ते परस्पराकूतहेतुकां वृत्तिम्।**
**पुरुषार्थएव हेतुर्न केनचित्कार्यते करणम् ॥३१॥**

करणानीति शेषः। यथा हि बहवः पुरुषाः शाक्तीकयाष्टीकधानुष्ककार्पाणिकाः(३) कृतसङ्केताः परावस्कन्दाय प्रवृत्ताः, तत्रान्यतमस्याकूतमवगम्यान्यतमः प्रवर्त्तते, प्रवर्त्तमानश्च शाक्तीकः शक्तिमेवादत्ते न तु यष्ट्यादिकम्, एवं याष्टीकोऽपि यष्टिमेव न शक्त्यादिकम्,(४)। तथान्यतमस्य करणस्याकूतात्(५) स्वकार्य्यकरणाभिमुखादन्यतमं करणं प्रवर्त्तते तत्प्रवृत्तेश्च हेतुमत्त्वान्न वृत्तिसङ्करइत्युक्तं स्वां स्वां प्रतिपद्यन्ते इति। स्यादेतत्

---

(१) यद्यपि क्रमशोऽक्रमशश्च वृत्तिसत्त्वं स्यात् तथापि शङ्कान्तरमुत्थापयति स्यादेतदिति एतत् क्रमशोऽक्रमशश्च वृत्तिसत्त्वमित्यर्थः।

(२) चतुर्णां वाह्येन्द्रियसहकृतमनआदिकानाम् प्रत्यक्षयोग्यविषयाभिप्रायमेतत्। त्रयाणामिति परोक्षविषयाभिप्रायमेतदिति द्रष्टव्यम्।

(३) कृपाणः प्रहरणमस्य ठक्। कृपाणपाणय इत्यर्थः।

(४) शक्त्यादिकमित्यत्र आदत्ते इत्यस्यानुषङ्गः। आदिपदात् कृपाणपरिग्रहः

(५) आकूतम् अभिप्रायसूचकव्यापारः इन्द्रियाणाञ्च स्वकार्य्यकरणाभिमुखत्वमेवेह तत्सूचकव्यापार इत्याह स्वकार्य्यकरणाभिमुखादिति भाव-

याष्टीकादयश्चेतनत्वात् परस्पराकूतमवगम्य प्रवर्त्तन्ते इति युक्तम्, करणानि त्वचेतनानि तस्मान्नैवं प्रवर्त्तितुमुत्सहन्ते तेनैषाम-धिष्ठाता करणानां स्वरूपसामर्थ्योपयोगाभिज्ञेन भवितव्यमत आह पुरुषार्थएव हेतुर्न केनचित्कार्य्यते(१)करणम्, भोगापवर्ग-लक्षणः(२)पुरुषार्थएवानागतावस्थः प्रवर्त्तयति करणानि, कृत-मत्र तत्स्वरूपाभिज्ञेन कर्त्रा । एतच्च वत्सविवृद्धिनिमित्त (५७संका०)मित्यत्रोपपादयिष्यते ॥३१॥

न केनचित् कार्य्यते करणमित्युक्तं तत्र करणं विभजते ।

**करणं त्रयोदशविधं तदाहरणधारणप्रकाशकरम् ।**
**कार्य्यञ्च तस्य दशधा हार्य्यं धार्य्यं प्रकाश्यञ्च ॥३२॥**

करणं त्रयोदशविधमिन्द्रियाण्येकादश बुद्धिरहङ्कारश्चेति त्रयोदशप्रकारं करणं कारकविशेषः करणम् । न च व्यापारा-वेशं विना कारकत्वमिति व्यापारमाह तदाहरणधारणप्रकाश-

---

प्रधाननिर्द्देशात् स्वस्वकार्य्यकरणाभिमुख्यरूपात् आकूतादित्यर्थः ।

(१) कार्य्यते व्यापार्य्यते कर्त्रेति शेषः ।

(२) तदेवोपपादयति भोगापवर्गलक्षणइत्यादि । तथाच पुरुषार्थयो र्भोगापवर्गयोरेव तत्प्रवृत्तौ नियामकत्वे स्थिते तत्स्वरूपाभिज्ञेन चेतनेन कृतं तत्प्रवर्त्तकचेतनकल्पनं निरर्थकमित्यर्थः एतच्च पुरुषखण्डनाभिप्रायेण नोक्तं किन्तु इन्द्रियवृत्तिप्रवर्त्तकत्वेन तत्कल्पन यत् प्रागुक्तं तस्य पराभिमतत्वद्योत-नायैव पुरुषस्य सिद्धिस्तु इतरहेतोरेव सम्भविष्यतीत्यभिप्रायेण ।

करम् यथायथं(१)तत्र कर्म्मेन्द्रियाणि वागादीन्याहरन्ति यथास्व मुपाददते स्वव्यापारेण प्राप्नुवन्तीति यावत् बुद्ध्यहङ्कारमनांसि तु स्ववृत्त्या (२) प्राणादिलक्षणया धारयन्ति, बुद्धीन्द्रियाणि प्रकाशयन्ति। आहरणधारणादिक्रियाणां सकर्मकतया किं? कर्म, कतिविधञ्चेत्यत आह कार्य्यञ्च तस्येति। तस्य त्रयोदशविधस्य करणस्य दशधा आहार्य्यं धार्य्यं प्रकाश्यञ्च कार्य्यम्। आहार्य्यं व्याप्यं(३) कर्मेन्द्रियाणां वचनादानविहरणोत्सर्गानन्दा यथा यथं व्याप्याः ते च यथायथं दिव्यादिव्यतया दश इत्याहार्य्यं दशधा। एवं धार्य्यम् अप्यन्तःकरणादित्रिकस्य प्राणादिलक्षणया वृत्त्या शरीरं, तच्च पार्थिवादि(४)पाञ्चभौतिकं शब्दादीनां (५) पञ्चानां समूहः पृथिवीति, ते च पञ्च दिव्यादिव्यतया दशेति धार्य्यमपि दशधा। एवं बुद्धीन्द्रियाणां शब्दस्पर्शरूपरसगन्धा यथायथं व्याप्याः ते च यथायथं दिव्यादिव्यतया दशेति प्रकाश्यमपि दशधेति ॥३२॥

त्रयोदशविधकरणेऽवान्तरविभागङ्करोति।

---

(१) यथायथमिति कर्म्मेन्द्रियाणि आहरन्ति, मनआदीनि धारयन्ति, चक्षुरादीनि प्रकाशयन्तीत्यर्थः।

(२) स्ववृत्त्या बुद्ध्यहङ्कारमनसां वृत्त्या कार्य्येण देहादिचालनरूप-व्यापारलक्षणेन प्राणेनेत्यर्थः।

(३) व्याप्यं क्रियाफलेनाप्यं कर्म्मेत्यर्थः।

(४) पार्थिवादीत्यत्र आदिपदात् आप्यतैजसादिग्रहणम्

(५) पञ्चभ्यो भूतेभ्यआगत इति ठकि पञ्चभूतजन्यत्वेन देहस्य कारणात् भिन्नत्वं स्यादित्यतः समूहार्थे ठगिति द्योतयन्नाह शब्दादीनां पञ्चानां समूहः

**अन्तःकरणं त्रिविधं दशधा बाह्यं त्रयस्य विषयाख्यम्।**
**साम्प्रतकालं बाह्यं त्रिकालमाभ्यन्तरं करणम्॥३३॥**

अन्तःकरणं त्रिविधं बुद्धिरहङ्कारोमनइति शरीराभ्यन्तरवर्त्तित्वादन्तःकरणम्। दशधा बाह्यमिन्द्रियं त्रयस्यान्तःकरणस्य विषयाख्यं विषयमाख्याति विषयसङ्कल्पाभिमानाध्यवसायेषु कर्त्तव्येषु द्वारीभवति तत्र बुद्धीन्द्रियाण्यालोचनेन, कर्मेन्द्रियाणि तु यथास्वं व्यापारेण। बाह्यान्तरयोः करणयोर्विशेषान्तरमाह साम्प्रतकालं बाह्यं त्रिकालमाभ्यन्तरं करणम्, साम्प्रतकालं वर्त्तमानकालं बाह्यमिन्द्रियं वर्त्तमानसमीपमनागतमतीतमपि वर्त्तमानम् अतो वागपि वर्त्तमानकालविषया भवति। त्रिकालमाभ्यन्तरं करणं तद्यथा नदीपूरभेदादभूद्दृष्टिः, अस्ति धूमादग्निरिह नगनिकुञ्जे, असत्युपघातके पिपीलिकाण्डसञ्चरणाद्भविष्यति दृष्टिरिति, तदनुरूपाश्च सङ्कल्पाभिमानाध्यवसाया भवन्ति। कालश्च वैशेषिकाभिमत एको न अनागतादिव्यवहारभेदं प्रवर्त्तयितुमर्हतीति तस्मादयं यैरुपाधिभेदैरनागतादिभेदं प्रपद्यन्ते सन्तु तएवोपाधयोनागता-

---

इति शब्दादीनां शब्दतन्मात्रादीनां समूहइत्यर्थः तत्र पृथिवीभागस्याधिक्येन पार्थिवादिव्यवहारइत्याख्यातमाह पृथिवीति च। यद्यपि सर्व्वेषां पञ्चभूतकार्य्यत्वं तथापि गन्धतन्मात्रात्मकपृथिवीभागस्याधिक्यात् पार्थिवादिव्यवहारः वैशेष्यात्तद्वाद स्तद्वादइति न्यायादिति भावः।

दिव्यवहारहेतवः क्षतमत्वान्तर्गडुना (१) कालेनेति सांख्या-चार्य्याः तस्मान्न कालरूपतत्त्वान्तराभ्युपगम इति ॥३३॥

साम्प्रतकालानां वाह्येन्द्रियाणां विषयं विवेचयति।

**बुद्धीन्द्रियाणि तेषां पञ्च विशेषाविशेषविषयाणि।**
**वाग्भवति शब्दविषया शेषाणि तु पञ्चविषयाणि॥३४॥**

बुद्धीन्द्रियाणि तेषां दशानामिन्द्रियाणां मध्ये पञ्च विशेषाविशेषविषयाणि विशेषाः स्थूलाः शब्दादयः शान्तघोरमूढाः पृथिव्यादिरूपाः, अविशेषास्तन्मात्राणि सूक्ष्माः शब्दादयः, मात्रग्रहणेन भूतभाविनावपाकरोति विशेषाश्चाविशेषाश्च विशेषाविशेषास्तएव विषया येषां बुद्धीन्द्रियाणां तानि तथोक्तानि। तत्रोर्द्ध्वस्रोतसां योगिनाञ्च श्रोत्रं शब्दतन्मात्रविषयं स्थूलशब्दविषयञ्च, अस्मदादीनान्तु स्थूलशब्दविषयमेव। एवं तेषां त्वक् स्थूलसूक्ष्मस्पर्शविषया अस्मदादीनान्तु स्थूलस्पर्शविषयैव। एवं चक्षुरादयोऽपि तेषामस्मदादीनाञ्च रूपादिषु सूक्ष्मस्थूलेषु द्रष्टव्याः (२) एवं कर्मेन्द्रियेषु मध्ये वाग्भवति शब्दविषया स्थूलशब्दविषया तद्धेतुत्वात् (३) न तु शब्दतन्मा-

---

(१) अन्तर्गडुना निष्प्रयोजनेनेत्यर्थः।

(२) समर्थादिति शेषः। तत्र तेषां स्थूलसूक्ष्मयोः, अस्माकं तु स्थूलमात्रे।

(३) तद्धेतुत्वात् वागिन्द्रियस्य स्थूलशब्दहेतुत्वात् तद्विषयत्वम्।

स्य हेतुः (१) तस्याहङ्कारिकत्वेनः (२)वागिन्द्रियेण (३) सहैक-कारणकत्वात्। शेषाणि तु चत्वारि पायूपस्थपाणिपादाख्यानि पञ्चविषयाणि पाण्याद्याहार्याणां घटादीनां पञ्चशब्दार्थत्वादिति ॥३४॥

साम्प्रतं त्रयोदशसु करणेषु केषाञ्चित् गुणभावं केषाञ्चित् प्रधानभावं सहेतुकमाह।

**सान्तःकरणा बुद्धिः सर्वं विषयमवगाहते यस्मात्।**
**तस्मात्त्रिविधं करणं द्वारि द्वाराणि शेषाणि ॥३५॥**

द्वारि(४)प्रधानं शेषाणि करणानि वाह्येन्द्रियाणि द्वाराणि तैरुपनीतं सर्व्वं विषयं समनोहङ्कारा बुद्धिर्यस्मादवगाहतेऽध्यवस्यति तस्माद्वाह्येन्द्रियाणि द्वाराणि द्वारवती च सान्तःकरणा बुद्धिरिति ॥ ३५ ॥

---

(१) शब्दतन्मात्रस्य वागिन्द्रियाविषयत्वे हेतुं द्योतयन् शब्दतन्मात्रं प्रति वागेन्द्रियस्य हेतुत्वं निरस्यति न तु शब्दतन्मात्रस्य हेतुरिति वागेन्द्रियमिति शेषः।

(२) तस्य शब्दतन्मात्रस्य आहङ्कारिकत्वेन अहङ्कारोपादनत्वेन वाक्कार्य्यत्वाभावादिति शेषः।

(३) तद्धेतुत्वाभावेनेव तेन सहैककारणकत्वादपि न तद्विषयत्वमित्याह वागिन्द्रियेणेत्यादि

(४) द्वारं विद्यतेऽस्य इतिः। द्वारि द्वारवत् प्रधानमित्यर्थः।

न केवलं वाह्यानीन्द्रियाण्यपेक्ष्य प्रधानं बुद्धिरपि तु ये अप्यहङ्कारमनसी द्वारिणी (१) ते अप्यपेक्ष्य बुद्धिः प्रधानमित्याह ।

**एते प्रदीपकल्पाः परस्परविलक्षणा गुणविशेषाः ।**
**कृत्स्नं पुरुषस्यार्थं प्रकाश्य बुद्धौ प्रयच्छन्ति ॥३६॥**

यथा हि ग्रामाध्यक्षाः कौटुम्बिकेभ्यः(२)करमादाय विषयाध्यक्षाय(३)प्रयच्छन्ति विषयाध्यक्षश्च सर्व्वाध्यक्षाय, स च भूपतये, तथा वाह्येन्द्रियाण्यालोच्य मनसे समर्पयन्ति मनश्च सङ्कल्प्याहङ्काराय,(४)अहङ्कारश्चाभिमत्य बुद्धौ सर्व्वाध्यक्षभूतायाम्, तदिदमुक्तं पुरुषस्यार्थं प्रकाश्य बुद्धौ प्रयच्छन्तीति। वाह्येन्द्रियमनोहङ्काराश्च गुणविशेषाः गुणानां सत्वरजस्तमसां विकाराः ते तु परस्परविरोधशीला अपि पुरुषार्थेन भोगापवर्गरूपेण एकवाक्यतां नीताः यथा वर्त्तितैलवह्नयः सन्तमसापनयेन रूपप्रकाशाय मिलिताः प्रदीपः, एवमेते गुणविशेषा इति योजना॥३६॥

कस्मात्पुनर्बुद्धौ प्रयच्छन्ति न तु बुद्धिरहङ्काराय द्वारिणे मनसे वेत्यतआह ।

---

(१) वाह्येन्द्रियापेक्षया प्रधाने। वाह्येन्द्रियै रुपनीय विषयाणां तयोः प्रत्यर्पणात् वाह्येन्द्रियापेक्षया तयोः प्राधान्यमिति द्रष्टव्यम् ।

(२) कुटुम्बभरणे प्रसृतः ठक् । कृषकादयोहि कुटुम्बभरणमात्रे व्यापृता नाधिके अतस्तएवात्र कौटुम्बिकाः ।

(३) विषयस्य देशस्य अध्यक्षः, करग्रहणे नियुक्तः ।

(४) अहङ्काराय समर्पयतीति वचनविपरिणामः। एवमुत्तरत्र

**सर्वं प्रत्युपभोगं यस्मात्पुरुषस्य साधयति बुद्धिः।**
**सैव च विशिनष्टि पुनः प्रधानपुरुषान्तरं सूक्ष्मम्॥३७॥**

पुरुषार्थस्य प्रयोजकत्वात्तस्य यत्साक्षात्साधनं तत् प्रधानं, बुद्धिश्चास्य साक्षात्साधनं, तस्मात्सैव प्रधानम्। यथा सर्व्वाध्यक्षः साक्षाद्राजार्थसाधनतया प्रधानम्, इतरे तु ग्रामाध्यक्षादयस्तं प्रति गुणभूताः। बुद्धिर्हि पुरुषसन्निधानात्तच्छायापत्त्या तद्रूपेव सर्व्वविषयोपभोगं पुरुषस्य साधयति, सुखदुःखानुभवो हि भोगः स च बुद्धौ, बुद्धिश्च पुरुषरूपेवेति (१) सा च पुरुषमुपभोजयति (२)। यथा आलोचनसङ्कल्पाभिमानाश्च तत्तद्रूपपरिणामेन बुद्धावुपसंक्रान्ताः तथा इन्द्रियादिव्यापारा अपि बुद्धेरेव स्वव्यापारेण अध्यवसायेन सह व्यापारीभवन्ति यथा स्वसैन्येन सह ग्रामाध्यक्षादिः सैन्यं (३) सर्व्वाध्यक्षस्य भवति। सर्व्वं शब्दादिकं प्रति य उपभोगः पुरुषस्य तं साधयति पश्चात् प्रधानपुरुषयोरन्तरं विशेषं विशिनष्टि करोति यथौदनपाकं पचतीति।

---

(१) पुरुषस्येव रूपं विषयप्रकाशनसामर्थ्यरूपं स्वरूपं यस्याः तथाभूता, तस्याः स्वतस्तथात्वाभावद्योतनाय इवशब्दः तथा च चितिच्छायापत्त्या बुद्धेः सुखदुःखानुभवप्रकाशकत्वात् भोगसाधनत्वम्।

(२) तद्योगादेव पुरुषे भोगसम्भवदृत्याह पुरुषमुपभोजयतीति।

(३) सर्व्वाध्यक्षस्य सैन्यमुपकरणं भवतीतियोजना

ननु (१) [पुरुषसर्वविषयोपभोगसम्पादिका बुद्धिस्तर्हि निर्मोच्चइत्यत आह, सूक्ष्ममिति दुर्लक्ष्यं] तदन्तरकरणस्य प्रतिपादनमनेनापवर्गः पुरुषार्थो दर्शितः ॥ ३७ ॥

तदेवं करणानि विभज्य विशेषाविशेषान् विभजते ।

**तन्मात्राण्यविशेषास्तेभ्यो भूतानि पञ्च पञ्चभ्यः ।**
**एते स्मृता विशेषाः शान्ता घोराश्च मूढाश्च ॥३८॥**

शब्दादितन्मात्राणि सूक्ष्माणि नचैषां शान्तत्वादिरस्ति उपभोगयोग्योविशेषइति मात्रशब्दार्थः । अविशेषानुक्त्वा विशेषान् वक्तुमुत्पत्तिमेषामाह तेभ्यस्तन्मात्रेभ्यः यथासंख्यमेकद्वित्रिचतुःपञ्चभ्यः भूतानि आकाशानिलानलसलिलावनिरूपाणि पञ्च, पञ्चभ्यस्तन्मात्रेभ्यः । अस्त्वेषां भूतानामुत्पत्तिर्विशेषत्वे किं? मायातमित्यत आह एते स्मृता विशेषाः । कुतः ? शान्ता घोराश्च मूढाश्च । च एको हेतौ, द्वितीयः समुच्चये, यस्मादाकाशादिषु स्थूलेषु सत्वप्रधानतया केचिच्छान्ताः सुखाः, प्रसन्नाः

(१) नन्वित्यनन्तरं पाठान्तरं [प्रधानपुरुषयोरन्तरस्य कृतकत्वादनित्यत्वं तत् कृतकत्वं मोक्षस्य स्यादित्यतआह सूक्ष्ममिति सूक्ष्मं दुर्लक्ष्यमित्यर्थः प्रधानादहमन्यइति विद्यमानमेवान्तरमविवेकेनाविद्यमानमिव बुद्धिर्बोधयति न तु करोति यतो नित्यमित्यर्थः ] । अयमेव पाठः समचीनः । कृतकत्वात् कार्य्यत्वात् अनित्यत्वम् । तत् तस्मात् कार्य्यत्वात् मोक्षस्य अनित्यत्वं स्यादित्याशङ्कार्थः । सूक्ष्ममित्यनेन तत्समाधानं तथा च तस्य विद्यमानत्वेऽपि अविद्यमानत्वेनेव बोधनमेवात्र तत्करणमिति न कृतकत्वमिति समाधानार्थः ।

लघवः। केचिद्रजःप्रधानतया घोरा दुःखाः, अनवस्थिताः केचित्तमःप्रधानतया मूढा विषण्णा गुरवः। तेऽमी परस्परव्यावृत्ता अनुभूयमाना विशेषा इति, स्थूला इति चोच्यन्ते तन्मात्राणि तु अस्मदादिभिः (१) परस्परव्यावृत्तानि नानुभूयन्त इत्यविशेषा इति, सूक्ष्मा इति चोच्यन्ते ॥३८॥

विशेषाणामवान्तरविशेषमाह।

**सूक्ष्मा मातापितृजाः सह प्रभूतैस्त्रिधा विशेषाः स्युः।**
**सूक्ष्मास्तेषां नियता मातापितृजा निवर्त्तन्ते ॥३९॥**

त्रिधा विशेषाः स्युः। तान् विशेषप्रकारानाह सूक्ष्मा इत्यादि। सूक्ष्मदेहाः परिकल्पिताः,(२) मातापितृजाः षाट्कौशिकाः(३)

---

(१) तन्मात्राणामपि परस्परव्यावृत्तस्वभावत्वमस्त्येव तच्च योगिमात्रगम्यमन्यथा सर्व्वेषामेकरूपत्वापत्तेरित्यशयेनाह अस्मदादिभिरिति अर्व्वाग्दर्शिभिरित्यर्थः।

(२) परिकल्पिताः अनुमिताः परलोके कर्म्मफलभोगः सूक्ष्मदेहं विनाऽनुपपन्नः भोगत्वात् स्थूलस्वदेहारब्धकृष्यादिजनितस्य शस्यस्य स्वदेहेनैव भोगवत् यद्यत् स्वदेहारब्धं कर्म्मादिफलं तत्तत् स्वदेहेनैव भोग्यं नेतरेण अन्यथा कृतहान्यकृताभ्यागमप्रसङ्ग इत्यादि तर्कश्चात्रानुसन्धातव्यः।

(३) षड्भिः रक्तमांसमेदोऽस्थिमज्जशुक्रावरकैः कोषैः रम्भास्तम्भत्वग्भिरिव वाह्याभ्यन्तरतया स्थित्याआवरकत्वात् तत्तुल्यैः निर्वृत्ताः षाट्कौशिकाः। तदुक्तं याज्ञवल्क्येन। "तस्य षोढा। शरीराणि षट् त्वचो धारयन्ति चेति"। रक्तादिषड्धातुपरिपाकहेतुभूतषडग्निस्थानयोगित्वेन शरीरस्य

तत्र मातृतो लोमलोहितमांसानि, पितृतस्तु स्नाय्व (१) स्थिमज्जानइति षट्कोशाः, प्रकृष्टानि महान्ति भूतानि प्रभूतानि तैः सह (२)। सूक्ष्मशरीरमेकोविशेषः मातापितृजो द्वितीयः महाभूतानि तृतीयः। महाभूतवर्गे (३) च घटादीनां निवेशइति। सूक्ष्ममातापितृजयोर्द्वयोर्विशेषमाह सूक्ष्मास्तेषां

---

षट्प्रकारत्वम्। तथाहि भुक्तान्नादिरसो जठराग्निना परिपच्यमानः रक्तत्वमापद्यते। रक्तञ्च स्वकोशस्थाग्निना पच्यमानं मांसताम्, मांसञ्च स्वकोशस्थाग्निना पच्यमानं मेदस्त्वम्, मेदोऽपि स्वकोशस्थाग्निना पच्यमानमस्थिताम् अस्थि च स्वकोशस्थवह्निना पच्यमानं मज्जात्वम् मज्जापि स्वकोशस्थाग्निना पच्यमाना शुक्रत्वमिति। "रसाद्वै शोणितं जातं शोणितान्मांससम्भवः। मांसात्तु मेदसोजन्म मेदसोऽस्थिसमुद्भवः। अस्थ्नोमज्जा समभवत् मज्जातः शुक्रसम्भवः। शुक्राद्गर्भः समभवदितिमहाभारते हरिवंशे स्पष्टमुक्तम्। इत्येवं चरमधातुशुक्रावरककोशे सत्यपि तस्य परित्यागेन अन्नरसपरिपाचक लोमावरककोशं गृहीत्वा ग्रन्थकृतेह यत् षाट्कौशिकत्वमुक्तं तन्मूलं चिन्त्यम्

(१) स्नायुःमेदः। शुभ्रत्वात् स्नाय्वस्थिमज्जकोशानां पितृशुक्रसाम्यात् तज्जत्वं परिशेषादन्येषां मातृजत्वम्।

(२) कारिकास्थं प्रभूतपदं व्याख्याय विशेषाणां त्रिविधत्वं गमयति सूक्ष्मेत्यादि।

(३) भूतानां महत्त्वम् अस्मादृशानां विशेषावधारणयोग्यत्वं तच्च पृथिव्यादीनामिव घटानामपि तुल्यमिति न विभागाधिक्यशङ्केत्याशयेनाह महाभूतवर्गे चेति।

विशेषाणां मध्ये ये, ते नियताः नित्याः (१)। मातापितृजा निवर्त्तन्ते रसान्ता(२)वा भस्मान्ता वा विड़न्ता (३) वेति ॥३९॥

सूक्ष्मशरीरं विभजते।

**पूर्व्वोत्पन्नम(श)सक्तं नियतं महदादिसूक्ष्मपर्य्यन्तम्।**
**संसरति निरुपभोगं भावैरधिवासितं लिङ्गम् ॥४०॥**

प्रधानेनादिसर्गे प्रतिपुरुषमेकैकमुत्पादितम् अस(श)क्तम-व्याहतं शिलामप्यनुविशति नियतम् आ चादिसर्गात् आ च महाप्रलयादवतिष्ठते महदादिसूक्ष्मपर्य्यन्तं महदहङ्कारैकादशे-न्द्रियपञ्चतन्मात्रपर्य्यन्तम् एषां समुदायः सूक्ष्मशरीरं, शान्त(४) घोरमूढैरिन्द्रियैरन्वितत्वाद्विशेषः। नन्वस्त्वेतदेव शरीरं भोगा-यतनं पुरुषस्य, कृतं दृश्यमानेन षाट्कौशिकेन शरीरेणेत्य-तआह संसरतीति उपात्तमुपात्तं षाट्कौशिकं शरीरं जहाति हायंहायं चोपादत्ते, कस्मात्? निरुपभोगं यतः,, षाट्कौशिकं

(१) नित्याः आप्रलयात् स्थिताः न तु प्रतिसर्गे जन्याः प्रतिप्रलयं वा विनाशिनः इत्यर्थः यथाचैते आमोक्षस्थायिनः तथाग्रे स्वयम् युक्त्या-प्रसाधयिष्यते।

(२) रसा पृथिव्येव अन्तः परिणामविशेषाधारौ येषां तथाच भूमावुत्खाताः क्रमेण मृद्रूपेण परिणता भवन्ति।

(३) कृतदाहानां भस्मान्तत्वं व्याघ्रादिभुक्तानां विष्ठारूपत्वमिति विशेषः।

(४) सूक्ष्मशरीरस्य पञ्चतन्मात्रात्मकत्वेऽविशेषापत्तिमाशङ्क्य घोरत्वादि विशेषयुक्तेन्द्रियात्मकत्वात् विशेषत्व मित्याह शान्तेत्यादि।

शरीरं विना सूक्ष्मं शरीरं निरुपभोगं, तस्मात्संसरति। ननु धर्म्माधर्म्मनिमित्तः संसारः न च सूक्ष्मशरीरस्यास्ति तद्योगः, तत्कथं संसरतीत्यत आह भावैरधिवासितं धर्म्माधर्मज्ञानाज्ञानवैराग्यावैराग्यैश्वर्य्यानैश्वर्याणि भावास्तदन्विता बुद्धिः तदन्वितञ्च सूक्ष्मशरीरमिति तदपि भावैरधिवासितं यथा सुरभिचम्पकसम्पर्काद्वस्त्रं तदामोदवासितम्भवति तस्माद्भावैरेवाधिवासितत्वात्संसरति। कस्मात्पुनः प्रधानमिव महाप्रलयेऽपि तच्छरीरं न तिष्ठतीत्यत आह लिङ्गम् लयं गच्छतीति लिङ्गं हेतुमत्त्वेन चास्य लिङ्गत्वमिति भावः॥४०॥

स्यादेतद्बुद्धिरेव साहङ्कारेन्द्रिया कस्मान्न संसरति कृतं सूक्ष्मशरीरेणाप्रामाणिकेनेत्यत आह।

**चित्रं यथाश्रयमृते स्थाण्वादिभ्योविना यथा छाया।**
**तद्वद्विना विशेषैर्न तिष्ठति निराश्रयं लिङ्गम् ॥४१॥**

लिङ्गनात् ज्ञापनात् बुद्ध्यादयोलिङ्गं तत् अनाश्रितं न तिष्ठति। जन्मप्रयाणान्तराले बुद्ध्यादयः प्रत्युत्पन्नशरीराश्रिताः प्रत्युत्पन्नपञ्चतन्मात्रवत्त्वे सति बुद्ध्यादित्वात् दृश्यमानशरीरवृत्तिबुद्ध्यादिवत्। विना विशेषैरिति सूक्ष्मैः शरीरैरित्यर्थः। आगमश्चात्र भवति 'अङ्गुष्ठमात्रं पुरुषं निश्चकर्ष यमोबलादिति'। (१) अङ्गुष्ठमात्रत्वेन सूक्ष्मतामुपलक्षयति आत्मनोनिष्कर्षासम्भवेन

(१) अत्रभगवद्गीतादिवाक्यमप्युदाहार्य्यम् "मनः षष्ठानीन्द्रियाणि प्रकृतिस्थानि कर्षति। शरीरं यदवाप्नोति यच्चाप्युत्क्रामतीश्वरः। गृहीत्वैतानि संयाति वायु-

सूक्ष्ममेव शरीरं पुरुष स्तदपि हि पुरि स्थूलशरीरे शेते ॥४१॥

एवं सूक्ष्मशरीरास्तित्वमुपपाद्य यथा संसरति येन च हेतुना, तदुभयमाह।

**पुरुषार्थहेतुकमिदं निमित्तनैमित्तिकप्रसङ्गेन।**
**प्रकृतेर्विभुत्वयोगान्नटवद्व्यवतिष्ठते लिङ्गम् ॥४२॥**

पुरुषार्थेन हेतुना प्रयुक्तं, निमित्तं धर्म्माधर्म्मादि, नैमित्तिकं तेषु तेषु निकायेषु यथायथं षाट्कौशिकशरीरग्रहः स हि धर्म्मादिनिमित्तप्रभवः निमित्तञ्च नैमित्तिकञ्च तत्र यः प्रसङ्गः प्रसक्तिस्तया नटवद्व्यवतिष्ठते लिङ्गं सूक्ष्मशरीरम्। यथाहि नटस्तां तां भूमिकां विधाय परशुरामोवा अजातशत्रुर्वा वत्सराजोवा भवति एवं तत्तत्स्थूलशरीरग्रहणात् देवोवा मनुष्योवा पशुर्वा वनस्पतिर्वा भवति सूक्ष्मं शरीरमित्यर्थः। कुतस्त्य: पुनरस्येद्दशोमहिमेत्यत आह प्रकृतेर्विभुत्वयोगात् तथा च पुराणां वैश्वरूप्यात् प्रधानस्य परिणामोऽयमद्भुत इति ॥ ४२ ॥

---

र्गश्चानिवाशयादिति "मनुरपि यन्मूर्त्त्यवयवाः सूक्ष्मास्तस्येमान्याश्रयन्ति षट्। तस्माच्छरीर मित्याहुस्तस्य मूर्त्तिं मनीषिण इति" तदाविशन्ति भूतानि महान्ति सह कर्म्मभिः। मनश्चावयवैः सूक्ष्मैः सर्व्वभूतकृदव्ययइति, अत्र च अहङ्कारसूक्ष्मपञ्चतन्मात्रप्रवेशोक्तिरिन्द्रियप्रवेशस्याप्युपलक्षणमेवमन्यत्र।

निमित्तनैमित्तिकप्रसङ्गेनेत्युक्तं तत्र निमित्तं नैमित्तिकञ्च विभजते।

**सांसिद्धिकाश्च भावाः प्राकृतिका वैकृतिकाश्च धर्माद्याः।**
**दृष्टाः करणाश्रयिणः कार्याश्रयिणश्च कललाद्याः॥४३॥**

वैकृतिका-नैमित्तिकाः, प्राकृतिकाः-स्वाभाविकाः, सांसिद्धिकाः भावाः यथा सर्गादावादिविद्वान् भगवान् कपिलो महामुनिर्धर्म्मज्ञानवैराग्यैश्वर्य्यसम्पन्नः प्रादुर्बभूवेति स्मरन्ति। वैकृतिकाश्च भावाः असांसिद्धिकाः उपायानुष्ठानोत्पन्नाः यथा प्राचेतस(१) प्रभृतीनां महर्षीणाम् एवमधर्म्माज्ञानावैराग्यानैश्वर्य्याण्यपि। कार्य्यं शरीरं तदाश्रयिणस्तस्यावस्थाः कललबुद्बुदमांसपेशीकरण्डाङ्गप्रत्यङ्गव्यूहाः गर्भस्थस्य, ततोनिर्गतस्य बालस्य बाल्यकौमारयौवनवार्द्धकानीति॥४३॥

अवगतानि निमित्तनैमित्तिकानि कतमस्य तु निमित्तस्य कतमन्नैमित्तिकमित्यत आह।

---

(१) वाल्मीकिप्रभृतीनाम्, तपसयैव तेषां ज्ञानैश्वर्य्यादिलाभस्य पुराणादावुक्तेः।

**वैराग्यात् प्रकृतिलयः संसारो भवति राजसाद्रागात्।
ऐश्वर्यादविघातोविपर्ययात्तद्विपर्यासः ॥४५॥**

वैराग्यात्प्रकृतिलयः पुरुषतत्त्वानभिज्ञस्य वैराग्यमात्रा(१)त्प्रकृतिलयः प्रकृतिग्रहणेन प्रकृतिकार्य्यमहदहङ्कारभूतेन्द्रियाणि गृह्यन्ते तेष्वात्मबुद्ध्या उपास्यमानेषु लयः ।संसारोभवति राजसाद्राग.त् राजसादित्यनेन रजसोदुःखत्वात्संसारस्य दुःखता सूचिता। ऐश्वर्य्या दविघातः (२) इच्छायाः, ईश्वरो हि (३) यदिच्छति तत्करोति। विपर्य्ययादनैश्वर्य्यात् तद्विपर्यासः सर्व्वत्रेच्छाविघात इत्यर्थः ॥४५॥

बुद्धिधर्म्मान् धर्म्मादीनष्टौ भावान् समासव्यासाभ्यां मुमुक्षूणां हेयोपादेयान् दर्शयितुं प्रथमतस्तावत्समासमाह।

---

पूर्त्तादिकं क्रमसुक्तौ प्रयोजकमिति द्योतयन् इष्टापूर्त्तकारिणं विशिनष्टि कामोपहृतमनाइति तथा च कामिनं प्रति कामानुसारेणैव इष्टापूर्त्तादेस्तत्तत्फलसाधनत्वेन न क्रमसुक्तिसाधनत्वमिति भावः।

(१) वैराग्यम् ऐहिकामुष्मिकसुखादिषु तृष्णाभावः। आत्मज्ञानासहकृतत्वं मात्रपदेनाभिधीयते।

(२) अविघातस्य संबन्ध्यपेक्षितया संबन्धिवाचकं पदं पूरयति इच्छायाइति।

(३) ऐश्वर्यस्य इच्छानभिघातहेतुत्वं दर्शयति ईश्वरो हीति।

**एष प्रत्ययसर्गो विपर्ययाशक्तितुष्टिसिद्ध्याख्यः।**
**गुणवैषम्यविमर्दात्तस्य च भेदास्तु पञ्चाशत् ॥४६॥**

प्रतीयतेऽनेनेति(१)प्रत्ययो बुद्धिस्तस्य सर्गः(२)तत्र विपर्य्ययोऽज्ञानमविद्या (३) च बुद्धिधर्म्मः अशक्तिरपि करणवैकल्यहेतुका (४) बुद्धिधर्म एव तुष्टिसिद्धी अपि वक्ष्यमाणे (५) बुद्धि-

---

(१) एतन्मते बुद्धेरेव करणत्वात् पौरुषेयबोधस्य च फलरूपत्वात् प्रत्ययपदं न भावसाधनमपि तु करणसाधनमित्याह प्रतीयतेऽनेनेति।

(२) कृदभिहितो भावो द्रव्यवत्प्रकाशते इति न्यायात् सर्गपदं सृज्यमानपरं तथाचाविद्यादेर्बुद्धिधर्म्मत्वात् तत्सृष्टत्वम् ॥

(३) कारिकास्थं विपर्य्ययपदं व्याचष्टेऽज्ञानमित्यादि। अज्ञानं ज्ञानाभावः, ज्ञानप्रागभावापरपर्य्यायः। अविद्याशब्देन अविद्याऽस्मितारागद्वेषाभिनिवेशरूपाः पञ्चापि गृह्यन्ते "अविद्या पञ्चपर्व्वैषा प्रादुर्भूता महात्मनः" इति विष्णुपुराणे पञ्चप्रकाराविद्यायाः महत्तत्त्वधर्म्मतोक्तेः।

(४) अशक्तिरसामर्थ्यं स्वकार्य्यकरणेऽपाटवं तच्च यद्यपि बुद्धेर्न स्वतः सम्भवति तथापि करणानामिन्द्रियाणां स्वस्वविषयग्रहणे वैकल्यमपाटवं स्वविषयग्राहित्वाभावः तत् हेतुः प्रयोजकं यस्याः तथाभूता तथा च इन्द्रियाणामपाटवेनैव तस्याः शक्तिराहित्यं न स्वत इति भावः।

(५) वक्ष्यमाणे तुष्टिर्नवधाऽष्टधा सिद्धिरिति (४७ सं०) कारिकायामिति शेषः।

धर्म्मादिव। तत्र(१)विपर्य्याशक्तितुष्टिषु यथायोगं सप्तानां धर्म्मादीनां ज्ञानवर्जमन्तर्भावः सिद्धौ च ज्ञानस्येति। व्यासमाह तस्य च भेदास्तु पञ्चाशत् कस्माद्गुणवैषम्यविमर्दात् गुणानां वैषम्यम् एकैकस्याधिकबलता द्वयोर्द्वयोर्वा, एकैकन्यूनस्य नबलता द्वयोर्द्वयोर्वा। (२) तेन न्यूनाधिक्ये मन्दमध्याधिक्यमात्रं यथाकार्य्यमुन्नेयम्। तदिदं गुणानां वैषम्यं तेनोपमर्द्दः एकैकस्य न्यूनबलस्य द्वयोर्द्वयोर्वाभिभवः तस्मात्तस्य भेदाः पञ्चाशदिति ॥४६॥

तानेव पञ्चाशद्भेदान् गणयति ।

**पञ्च विपर्य्ययभेदा भवन्त्यशक्तिश्च करणवैकल्यात् ।**
**अष्टाविंशतिभेदा(३)तुष्टिर्नवधाष्टधा सिद्धिः ॥४७॥**

---

(१) ननु बुद्धेः धर्म्माधर्म्मज्ञानाज्ञानवैराग्यावैराग्यैश्वर्य्यानैश्वर्य्यात्मकाष्टविधधर्म्मवत्त्वस्यैव क्षमते स्वीकारात् विपर्य्यादिभिरधिकगुणत्वापत्तिरतस्तत्रैव धर्म्मादीनामन्तर्भावं दर्शयति तत्रेत्यादि। ज्ञानवर्ज्जं ज्ञानभिन्नानामित्यर्थः। धर्म्मादीनां सप्तानां यथायोगं-यत्र यस्यान्तर्भावो भवितुमर्हति तत्र तस्यान्तर्भावः। तथा च अज्ञानस्य विपर्य्यये, अनैश्वर्य्यस्य, अवैराग्यस्य, अधर्म्मप्रभवत्वेन च अधर्मस्य च अशक्तौ, शिष्टानां तुष्टौ अन्तर्भावइति भावः।

(२) यद्यपि गुणत्रयाणां मध्ये एकैकस्याधिकबलत्वकथनेनैव द्वयोर्द्वयोर्न्यूनबलतालाभः तथा एकैकस्य न्यूनबलताकथनेन द्वयोर्द्वयोरधिकबलतालाभः तथापि वैषम्यमुभयथापि भवतीति द्योतनायैव तथानिर्द्देशः न तु मतान्तरप्रतिपादनाय।

(३)अशक्तेरष्टाविंशतिविधत्वमग्रे एकादशेन्द्रियेत्यादि(४९संका०)वक्ष्यते ।

अविद्यास्मितारागद्वेषाभिनिवेशाः(१)यथासंख्यं तमोमोह-महामोहतामिस्रान्धतामिस्रसंज्ञकाः पञ्च विपर्ययविशेषाः(२) विपर्ययप्रभवानामस्मितादीनां विपर्ययस्वभावत्वात् यद्वा यद्-विद्यया विपर्ययेणावधार्यते (३) वस्तु, अस्मितादयस्तत्स्वभावाः सन्तस्तदभिनिविशन्ते। अतएव पञ्चपर्व्वा अविद्येत्याह भगवान् वार्षगण्यः ॥४७॥

सम्प्रति पञ्चानां विपर्ययभेदानामवान्तरभेदमाह।

**भेदस्तमसोऽष्टविधोमोहस्य च दशविधोमोहामोहः तामिस्रोऽष्टादशधा तथा भवत्यन्धतामिस्रः ॥४८॥**

---

(१) अविद्यादीनां स्वरूपादिकं तु भेदस्तमस इत्यादौ (४८संका०) वक्ष्यते तेषां तमआदिपदाभिधेयत्वं च शास्त्रान्तरे प्रसिद्धमिहापि उत्तरका-रिकायां वक्ष्यते।

(२) तमआदीनां विपर्ययभेदत्वे हेतुं दर्शयति विपर्य्ययप्रभवाना-मिति। योयप्रभवः स तत्स्वभावः यथा मृत्प्रभवोघटः मृत्स्वभाव इति व्याप्तिसद्भावात् तमआदीनां विपर्य्ययविशेषत्वं कार्य्यकार-णयोरभेदस्वीकारात्। यथार्थविषयावरकत्वतारतम्येनैव तेषां तत्तत्-पदाभिधेयता।

(३) विपर्य्ययभेदरूपया अविद्यया यत् यद्रूपेण वस्तु अवधार्य्यते अस्मितादयोऽपि तद्वस्तु तथैव अभिनिविशन्ते विषयीकुर्व्वन्ति इत्यर्थः।

भेदस्तमसोऽविद्याया अष्टविधः अष्टसु अव्यक्तमहदहङ्कारपञ्च-तन्मात्रेषु अनात्मस्वात्मबुद्धिरविद्या(१)तमः। अष्टविधविषयत्वात्त स्याष्टविधत्वम् मोहस्य च अत्राप्यष्टविधोभेदइति चेना(२)नुष-ज्यते। देवा (३) ह्यष्टविधमैश्वर्य्यमासाद्यामृताभिमानिनोऽणिमा-दिकमात्मीयं शाश्वतिकमभिमन्यन्ते (४)इति सोयमस्मितामो-हो(५)ऽष्टविधैश्वर्य(६) विषयत्वादष्टविधः। दशविधोमहामोहः शब्दादिषु पञ्चसु दिव्यादिव्यतया दशविधेषु विषयेषु रञ्जनीयेषु(७)

---

(१) अविद्यास्वरूपमाह अनात्मेत्यादि अनात्मसु आत्मबुद्धिर्मिथ्याज्ञान मविद्या तम इतिचाख्यायते। तस्यानात्माष्टविधविषयत्वादष्टविधत्वमित्या-ख्यातुं विषयानष्टौ दर्शयति अष्टस्वित्यादि।

(२) चेन चकारेण मोहस्येत्यस्मादुत्तरं श्रूयमाणेनेत्यर्थः।

(३) मोहरूपास्मितताया अष्टविधत्वमुपपादयितुमष्टविषयत्वं मोहस्वरूपञ्च दर्शयति देवा हीति तथाच गर्वहेतुकाभिमानविशेषाऽस्मितारूपोमोह-इति तत्स्वरूपम्। तेषां गर्वसद्भावं द्योतयितुमाह अष्टविधैश्वर्य्य मासाद्येत्यादि।

(४) शाश्वतिकमात्मीयम् अभिमन्यन्तइत्युक्तिः अशाश्वतिकस्यानात्मीयस्य बुद्धिधर्मस्यात्मीय त्वेनाभिमानरूपमोहस्वरूपत्वकथनाय।

(५) अस्मितारूपो मोहः अस्मितामोहः।

(६)अष्टविधैश्वर्य्यविषयत्वात् अष्टविधैश्वर्य्यहेतुकाभिमानविशेषरूपत्वात्

(७) रञ्जनीयेषु रागविषयेषु दिव्येषु अदिव्येषु पञ्चसु शब्दादिषु अतो दशविधेषु राग आसक्तिः इति स्वरूपनिर्द्देशः।

रागआसक्तिर्महामोहः स च दशविधविषयत्वाद्दशविधः। तामिस्रोद्वेषोऽष्टादशधा। शब्दादयो दश(१)विषया रञ्जनीयाः स्वरूपतः, ऐश्वर्य्यं त्वणिमादिकं न स्वरूपतोरञ्जनीयं किन्तु रञ्जनीयशब्दाद्युपायाः। ते च(२)शब्दादयउपस्थिताः परस्परेणोपहन्यमानास्तदुपायाश्चाणिमादयः स्वरूपेणैव कोपनीया(३)भवन्तीति। शब्दादिभिर्दशभिः सहाणिमाद्यष्टकमष्टादशधेति तद्विषयोद्वेष-

---

(१) ननु रागोहीच्छाविशेषः स च स्वभावतः सुखे दुःखाभावे चाभिजायते तत्साधनेषु शब्दादिषु तु तत्साधनताज्ञानद्वारा। तत्साधनताज्ञानञ्च शब्दादीनामिव ऐश्वर्य्यादीनामप्यस्ति अतः कुतः दशविधविषयत्वमेव ऐश्वर्य्याद्यष्ट विषयत्वेनापि द्वेषस्येव अष्टादशविषयत्वापत्तिरित्याशङ्क्य ऐश्वर्य्यादीनां न स्वतः रागविषयत्वं किन्तु शब्दादिद्वारेणैव भवतीति साक्षात् स्वाभीष्टसाधनानि शब्दादय एवातस्तदुपायत्वेन तेषामेव रागविषयत्वम् ऐश्वर्य्यादीनान्तु सुखादिसाधनशब्दादिसाधनत्वेनेति परम्परया तत्साधनत्वमिति साक्षात्साधनमपेक्ष्य परम्परितसाधनानां ग्रहणायोग्यतया अष्टादशविधत्वमिति समाधत्ते शब्दादयोदशेत्यादि। स्वरूपतः साक्षात् सुखसाधनत्वेन रञ्जनीयाः दृष्टा न तु ऐश्वर्य्यादीनीव परम्परितसाधनानीत्यर्थः।

(२) कुतश्चित् कारणात् रागएवाभिहतोद्वेषोभवति स च अनिष्टे दुःखे, सुखाभावे च स्वतएव भवति तस्य च शब्दादिदशविधहेतुकत्वात् अणिमाद्यष्टविधैश्वर्य्यादिभिः प्रतिहन्यमानत्वाच्च अष्टादशविधविषयत्व मित्याह ते चेत्यादि।

(३) कोपनीया द्वेषविषया इत्यर्थः।

स्तामिस्रोऽष्टादशविषय(१)त्वादष्टादशधेति। तथा भवत्यन्धतामिस्रः अभिनिवेशस्त्रासः (२) तथेत्यनेनाष्टादशधेत्यनुषज्यते। देवाः खल्वणिमादिकमष्टविधमैश्वर्य्यमासाद्य दश शब्दादीन् भुञ्जानाः शब्दादयोभोग्यास्तदुपायाश्चाणिमादयो ऽस्माकमसुरादिभिर्मा स्म उपघानिशतेति बिभ्यति। तदिदं भयमभिनिवेशोऽन्धतामिस्रोऽष्टादशविषयत्वात् अष्टादशधेति। सोऽयं पञ्चविधविकल्पोविपर्ययोऽवान्तरभेदात् द्वाषष्टिरिति(३) ॥४८॥

तदेवं पञ्च विपर्ययभेदानुक्त्वा अष्टाविंशतिभेदामशक्तिमाह।

**एकादशेन्द्रियबधाः सह बुद्धिबधैरशक्तिरुद्दिष्टा।**
**सप्तदश बधा बुद्धेर्विपर्ययात्तुष्टिसिद्धीनाम् ॥४९॥**

एकादशेन्द्रियबधाः

---

(१)अष्टादश विषया यस्य तस्यभावस्तस्मात् विषयत्वञ्च फलतासाधनतासाधारणं, तेनैश्वर्य्यादीनाम् उपादानताख्यविषयतावत्त्वात् अष्टादशविषयत्वसम्भवो द्वेषस्ये त्यवधेयम्।

(२)अभिनिवेशरूपान्धतामिस्रस्य स्वरूपमाह त्रासइति अपसरणादिहेतुरनिष्टसाधनताज्ञानाधीनबुद्धिष्टचित्तिभेदस्त्रासोभयमन्धतामिस्रमिति चाख्यायते

(३)द्वाषष्टिः। तमसो ऽष्टौ, मोहस्याऽष्टौ, महामोहस्य दश'तामिस्रस्याष्टादश, अन्धतामिस्रस्याष्टादश भेदाइति तमआद्यात्मकविपर्य्ययस्य द्वाषष्टिर्भेदाः

वाधिर्य्यं, कुष्ठिताऽन्धत्वं, जड़ताऽजिघ्रता तथा(१)।
मूकता, कौण्यपङ्गुत्वक्लैव्योदावर्त्तमन्दताः।

यथासंख्यं श्रोत्रादीनामिन्द्रियाणां बधाः एतावत्येव तु तद्धे-तुका(२) बुद्धेरशक्तिः स्वव्यापारे भवति। तथाचैकादशहेतुकत्वादेकादशधा बुद्धेरशक्तिरुच्यते। हेतुहेतुमतोरभेदविवक्षया च सामानाधिकरण्यम्। तदेवमिन्द्रियबधद्वारेण बुद्धेरशक्तिमुक्ता स्वरूपतोऽशक्तीराह सह बुद्धिबधैरिति(३)। कति बुद्धेः

(१) पूर्वार्द्धं ज्ञानेन्द्रियाणाम् अपाटवमुक्तमुत्तरार्द्धं कर्मेन्द्रियाणामिति मनसश्च उभयेन्द्रियानुकूल्यादन्तेऽभिनिवेश इति भेदः। तत्र वाधिर्य्यं श्रोत्रगतं शब्दग्रहणापाटवम्। कुष्ठिता त्वग्गतं स्पर्शग्रहणापाटवम्। अन्धत्वं नेत्रगतं रूपग्रहणापाटवम्। जड़ता रसनागतं रसग्रहणापाटवम्। मूकता वागिन्द्रियगतं वचनापाटवम्। कौण्यं हस्तगतमादानापाटवम्। पङ्गुत्वं पादगतं चलनापाटवम्। क्लैव्यमुपस्थगतं मैथुनासामर्थ्यम्। उदावर्त्तः अपानगतं विष्ठोत्सर्गासामर्थ्यम्। मन्दता मनोगतं सुखादिविषयग्रहणासामर्थ्यम्।

(२) एकादशेति पञ्च ज्ञानेन्द्रियाणि पञ्च कर्मेन्द्रियाणि मनश्चेति एकादशेन्द्रियाणां बधाः स्वस्वकर्म्माक्षमत्वरूपा धर्मभेदाः तद्धेतुकत्वात् बुद्धेः स्वविषयाग्रहणमिष्यते अतो बुद्धेरशक्तिरेकादशविधैवेत्याह तथा चेत्यादि।

(३) ये बुद्धेः सप्तदश भेदा उत्तरार्द्धे वक्ष्यन्ते तैः सप्तदशभिः सह मिलिता एकादश भेदाः अष्टाविंशतिर्भेदाः स्युः तथा च शक्तिरष्टाविंशतिभेदा इति यदुक्तं तत् समर्थितमिति द्रष्टव्यम्।

स्वरूपतोऽवधाइत्यत आह सप्तदश वधा बुद्धेः, कुतः? विपर्य्ययात्तुष्टिसिद्धीनाम्, तुष्टयोनवधेति तद्विपर्ययास्तन्निरूपणान्नवधा भवन्ति । एवं सिद्धयोऽष्टाविति तद्विपर्ययास्तन्निरूपणात् अष्टौ भवन्तीति ॥४९॥

तुष्टिर्नवधेत्युक्तं ताः परिगणयति ।

**आध्यात्मिक्यश्चतस्रः प्रकृत्युपादानकालभाग्याख्याः ।**
**बाह्याविषयोपरमात्पञ्च नव तुष्टयोऽभिमताः ॥५०॥**

प्रकृतिव्यतिरिक्त आत्मास्तीति प्रतिपद्य ततोऽस्य श्रवणमननादिना विवेकसाक्षात्काराय त्वसदुपदेशतुष्टो(१) यो न प्रयतते तस्य (२) चतस्र आध्यात्मिक्यस्तुष्टयोभवन्ति प्रकृतिव्यतिरिक्तमात्मानमधिकृत्य(३) यस्मात्तास्तुष्टयस्तस्मादाध्यात्मिक्यः, कास्ताइत्यत आह प्रकृत्युपादान(४) कालभाग्याख्याः प्रकृत्या-

(१) असता असम्यग्भूतेन उपदेशेन तुष्टः तस्यानायामसाध्यत्वेन कृतकृत्यताभिमानी सन् श्रवणमननादिना आगमोक्तसाधनेन विवेकसाक्षात्काराय आत्मा प्रकृत्यादिभ्यो भिन्न इत्येवं विवेकसाक्षात्काराय न प्रयतते इत्यन्वयः ।

(२) तस्य असदुपदेशवतः शिष्यस्येत्यर्थः ।

(३) तासामाध्यात्मिकशब्दवाच्यत्वप्रदर्शनायावयवार्थं दर्शयति प्रकृतिव्यतिरिक्तमित्यादि । अध्यात्मशब्दात् ठञ् प्रत्ययः ।

(४) उपादीयते फलसाधनाय गृह्यते इदमित्युपादानम्, फलसाधनम्, तच्च प्रकृते प्रव्रज्यैव तस्या एव "यदहरेव विरज्येत् तदहरेव प्रव्रजेदित्यादि"

दिराख्या यासां तास्तथोक्ताः। तत्र(१) प्रकृत्याख्या तुष्टिर्यथा कस्यचिदुपदेशः 'विवेकसाक्षात्कारोहि प्रकृतिपरिणामभेदः तञ्च(२) प्रकृतिरेव करोतीति कृतं ते ध्यानाभ्यासेन, तस्मादेव-मेवास्व वत्सेति'। सेयमुपदेष्टव्यस्य शिष्यस्य प्रकृतौ तुष्टिः प्रकृत्या-ख्या तुष्टिः अम्भ(३) इत्युच्यते। "या तु(४)प्राकृत्यविवेकख्यातिर्न

---

न्यत्या साधनत्वस्य निर्देशात् एतदाशयेनाग्रे उपादानशब्देन प्रव्रज्या-भिधास्यते।

(१) उपदेशस्यासत्त्वं विवेक साक्षात्कारस्य साक्षादुपकारकहेतोरनि-र्देशात् तदेवोदाहरणेन क्रमेण प्रकटयिष्यते। तत्रेति तासु चतसृषु मध्ये इत्यर्थः।

(२) तञ्च विवेकसाक्षात्कारन्तु प्रकृतिरेव स्वयं न त्वन्यसापेक्षा करोति करिष्यति भविष्यत्सामीप्ये लट्। तथा च साक्षात्कारस्य बुद्धिधर्मतया बुद्धेश्च प्रकृतिपरिणामविशेषत्वात् बुद्धौव साक्षात्कारस्य जनने प्रकृतेस्तत्साधनत्वम-र्थायातम्। प्रकृतिरेवेत्येवकारव्यवच्छेद्यं ध्यानाभ्यासादेर्हेतुत्वं निरस्यति कृतमिति अलमित्यर्थेऽव्ययम्, ध्यानाभ्याससाध्यं नास्तीत्यर्थः। यथा मृदादे र्घटपरिणामे दण्डादिरूपकारणव्यापारापेक्षा एवं बुद्धेस्तथा साक्षात्कार-रूपेण परिणामे ध्यानाभ्यासादेर्हेतुत्वमन्यथा तस्य सदातनत्वापत्तिरित्येवा स्योपदेशस्यासत्त्वमिति द्रष्टव्यम्।

(३) अस्यास्तु तुष्टेरम्भस इव प्रसन्नत्वात् उपदेशरूपशब्दहेतुकत्वाच्च अम्भस्त्वम् अभि शब्दे इति धातोरसुनन्तस्य शब्दहेतुकरूपार्थानुगमात्।

(४) प्रकृत्या निर्वृत्ता अण् प्राकृती तथा च प्रकृतिजन्यत्वेऽपि तस्याः सहकार्य्यन्तरापेक्षाऽस्त्येव तेन साक्षात्कारस्य न सदातनत्वापत्तिरूपदोष-

सा प्रकृतिमात्राद्भवति सा तु सर्व्वस्य सर्वदा तस्मादस्य सर्व्वान् प्रत्यविशेषात् प्रव्रज्यायास्तु सा भवति तस्मात्प्रव्रज्यामुपाददीथाः कृतं ते ध्यानाभ्यासेनायुष्मन्नित्युपदेशे” या तुष्टिः सोपादानाख्या सलिल(१)मुच्यते। “या तु प्रव्रज्यापि न सद्यो निर्व्वाणदेति(२) सैव कालपरिपाकमपेक्ष्य सिद्धिन्ते विधास्यति

---

प्रसङ्गः। तत्सहकारिणी च प्रव्रज्यैव सा हि सर्व्वानुष्ठानशून्यरूपा साक्षात्कारप्रतिबन्धककर्म्मानुष्ठानापसारणेन साक्षात्कारं जनयति सति तु कर्म्मानुष्ठाने तत्रैव व्यग्रतया बुद्धिर्न साक्षात्कारायालमिति प्रतिबन्धकनिरसनद्वारा प्रव्रज्यायाः साक्षात्कारहेतुत्वमित्याशयः। वस्तुतः प्रव्रज्याया अपि केवलाया न साक्षात्कारहेतुत्वं “न लिङ्गं धर्मकारणमिति” अनुना लिङ्गमात्रस्य फलहेतुताया निरासात् किन्तु तत्रानुष्ठेयध्यानाभ्यासादिनैव साक्षात्कारो भविष्यतीति कारणकारणतया प्रव्रज्याया अन्यथासिद्धत्वादेतस्याप्यसदुपदेशत्वमिति बोध्यम्।

(१) सलिलमिति अङ्कुरं प्रति सलिलस्येव प्रव्रज्यायाः साक्षात्कारं प्रति सहकारित्वात् सलिलसदृशत्वम्, साक्षात्कारस्य च फलार्थिभिरुपादीयमानत्वादुपादानत्वमिति बोध्यम्।

(२) प्रव्रज्यामात्रस्य विवेकख्यातिहेतुत्वे प्रव्रज्याग्रहणकालेन विवेकख्यात्यापत्तिरूपम् उपदेशे असत्यप्रयोजकं दूषणमुक्तं तत्तु सहकार्य्यन्तरापेक्षाकल्पनात् परिहरन्नुपदेशान्तरं दर्शयति न सद्यो निर्व्वाणदेति। सद्यः, ग्रहणमात्रात् न तु कालरूपसहकार्य्यन्तरापेक्षणेन न निर्व्वाणदा विवेकख्यातिजननद्वारा न मुक्तिदेत्यर्थः। यथा च “उपेतेष्टिसमायोगे दृश्यन्ते फलसिद्धयः। तास्तु काले प्रदृश्यन्ते नैवाकाले कथञ्चन” इति शास्त्रेण, कार्य्यमात्रं प्रति कालस्य सहकारितया अन्वयव्यतिरेकाभ्यां च प्रसिद्धत्वात् कालस्यैव

असमुत्तमतया तवेत्युपदेशे" या तुष्टिः सा कालाख्या मेघ(१)उच्यते। "या तु न कालात्(२) नाप्युपादानाद्विवेकख्यातिरपि तु भाग्यादेव अतएव मदालसापत्यानि(३) अतिबालानि मातुरुपदेश-

तद्धेतुत्वमस्तु कृतं ध्यानाभ्यासादिनेति समुदितार्थः। कालस्य साधनतासाधकशास्त्रेण कृष्यादेः फलहेतुत्वं तत्र कालस्य सहकारितामात्रं प्रतिपादितं न तु तन्मात्रहेतुत्वमेवञ्च कालस्य साधारणकारणत्वम् असाधारणकारणत्वन्तु कृष्यादेरेव एवञ्च प्रकृतेऽपि विवेकख्यातिं प्रति ध्यानाभ्यासादेरेवारादुपकारकत्वात् असाधारणहेतुत्व, कालस्य साधारणहेतुत्वमित्यस्यासदुपदेशत्वमिति बोध्यम्।

(१) अस्यास्तु तुष्टेः मेघस्येव फलसिद्धिहेतुभूतदृष्टिसाधनत्वेन मेघतुल्यत्वम्।

(२) कालात् कालमात्रात्। उपादानात् प्रव्रज्यारूपसाधनमात्रादित्यर्थः। असाधारणकारणतानिरासार्थं नञ्प्रयोगः। अन्यथा कार्य्यमात्रं प्रति कालस्य, विवेकख्यातिं प्रति प्रव्रज्यायाश्च साधारणकारतायाः सर्व्वसम्मताया अनुपपत्तिः। कार्य्यमात्रं प्रति भाग्यस्य कारणतायाः "पौरुषं दैवसम्पत्त्या काले फलति पार्थिव" इति शास्त्रेण प्रतिपादनात् तन्मूलकं भाग्यस्य कारणत्वमाह भाग्यादेवेति। इतरकारणनिरासार्थमेवकारः। भाग्यस्य कारणताग्राहकशास्त्रेणैव पौरुषकालयोः सहकारितानिर्देशात् तन्मात्रहेतुत्वकथनादस्याप्यसदुपदेशत्वमिति बोध्यम्।

(३) भाग्यमात्रात् विवेकख्यातौ पुराणसंवादमाह मदालसापत्यानीति। मदालसा हि स्वापत्यानि उपदिदेश तदुपदेशमधिगत्यैव तदपत्यानि कालं संन्यासञ्च अन्तरेण विवेकख्यातिं लब्ध्वा मुमुचुरिति पुराणप्रसिद्धम्। तथा च यदि कालस्य प्रव्रज्याया वा विवेकख्यातौ हेतुत्वं स्यात् तर्हि तेषां तदुभयाभावेन सद्योमुक्तिविधायकं पुराणवाक्यं विप्रलम्भवाक्यमिवाप्रमाणं स्या-

मात्रादेव विवेकख्यातिमन्ति मुक्तानि बभूवुः तत्र भाग्यमेव हेतुर्नान्यदित्युपदेशे या तुष्टिः सा भाग्याख्या वृष्टिरुच्यते(१)। बाह्या(२) दर्शयति बाह्यास्तुष्टयोविषयोपरमात्पञ्च, याः खल्वनात्मनः प्रकृतिमहदहङ्कारादीनात्मेत्यभिमन्यमानस्य वैराग्ये सति तुष्टयस्ता बाह्याः आत्मज्ञानाभावेऽनात्मानमधिकृत्य प्रवृत्तेरिति(३)। ताश्च वैराग्ये सति सम्भवन्ति तुष्टयइति वैराग्यहेतुपञ्चविधत्वाद्वैराग्याख्यपि पञ्च, तत्पञ्चकत्वात् तुष्टयः पञ्चेति, उपरम्यतेऽनेनेत्युपरमोवैराग्यं विषयादुपरमो विषयोपरमः। विषया भोग्याः शब्दादयः पञ्च उपरमा अपि पञ्च। तथा च अर्ज्जनरक्षणक्षयभोगहिंसादोषदर्शनहेतुजन्मान उपरमाः पञ्च भवन्ति। तथा हि

---

दतस्तत्र भाग्यस्यैव हेतुत्वं वाच्यं तत्साम्यादन्यत्रापि तथा कल्पनीयमिति भावः। सिद्धान्ते ध्यानाभ्यासादेरेवान्वयव्यतिरेकाभ्यां तद्धेतुत्वे सिद्धे तत्रापि प्राग्भवीयध्यानाभ्यासादिकस्य कल्पनात् न काप्यनुपपत्तिरिति तस्याप्यसदुपदेशत्वमिति द्रष्टव्यम्।

(१) वृष्टिरिति। वीजसहकारेण वृष्टेरिवास्याः फलहेतुत्वात् वृष्टिसाम्यम्।

(२) एवम् आध्यात्मिकीः तुष्टीः सविभागं प्रदर्श्य वाह्यतुष्टितद्विभागौ दर्शयितुं कारिकाऽपरार्द्धमवतारयति वाह्या इति।

(३) तासां वाह्यत्वे हेतुं दर्शयति आत्मज्ञानाभावे इति आत्मनः पुरुषस्य ज्ञानाभावे स्वरूपलक्षणाभ्यां सम्यगवबोधाभावे अनात्मानं आत्मभिन्नं प्रकृत्यादिकमधिकृत्य अवलम्ब्य प्रवृत्तेः तथा च वाह्यवस्तुप्रकृत्यादिविषयत्वात् तासां वाह्यत्वमिति भावः।

सेवाद्योधनोपार्जनोपायास्ते च सेवकादीन् दुःखाकुर्वन्ति। इत्यहुरीश्वरद्वाःस्थहस्तदत्तचण्डार्द्धचन्द्रजां(१) वेदनां भावयन् प्राज्ञः कः सेवासु प्रसज्जते। एवमन्येऽप्यर्जनोपाया दुःखादूति विषयोपरमे या तुष्टिः सैषा पार(२) मुच्यते। तथार्जितं धनं राजैकागारिका(३)ग्निजलौघादिभ्योविनश्यतीति तद्रक्षणे महद्दुःखमिति भावयतोविषयोपरमे या तुष्टिः सा द्वितीया सुपार(४) मुच्यते। तथा महतायासेनार्जितं धनं भुज्यमानं क्षीयते इति तत्प्रक्षयं भावयतोविषयोपरमे या तुष्टिः सा तृतीया पारापार(५)मुच्यते। एवं शब्दादिभोगाभ्यासादर्द्धन्ते कामास्ते च विषयाप्राप्तौ कामिनं दुःखयन्तीति भोगदोषं भावयतो विषयोपरमे या तुष्टिः सा चतुर्थी अनुत्तमाम्भ(६) उच्यते। एवं

---

(१) चण्डा तीव्रा असह्येत्यर्थः अर्द्धं चन्द्रस्य उपचारात् तत्सदृशगलहस्तताड़नम्, तज्जाता पश्चात् एकस्य विशेष्यत्वविवक्षया कर्मधारयः चण्डा मर्द्धचन्द्रजामिति तु सम्यक् पाठः।

(२) वैराग्यद्वारा संसारपारहेतुत्वात्तस्य पारत्वम्।

(३) एकमसहायमगारं प्रयोजनमस्य ठक्। ऐगागारिकश्चौरः।

(४) वैराग्यद्वारा सुखेन पारहेतुत्वादस्य सुपारत्वम्।

(५) वैराग्यद्वारा संसारपारहेतुत्वात् पारत्वम् नास्ति पारं पारसाधनं यस्मात् तत् उत्कृष्टपारसाधनम् पश्चात् कर्म्मधारयः।

(६) नास्ति उत्तमं यस्मात् अनुत्तममत्युत्कृष्टम् अङ्कुरं प्रति अम्भस इव विवेकख्यातिं प्रति साधनत्वात्तस्य अम्भस्त्वम्।

नानुपहत्य भूतानि विषयोपभोगः सम्भवतीति हिंसादोष-दर्शनाद्विषयोपरमे या तुष्टिः सा पञ्चमी उत्तमाम्भ(१) उच्यते। एवमाध्यात्मिकीभिश्चतसृभिर्बाह्याभिश्च पञ्चभिर्नव तुष्टयोऽभिमताः ॥५०॥

गौणमुख्य(२) भेदाः सिद्धीराह।

**ऊहः शब्दोऽध्ययनं दुःखविघातास्त्रयः सुहृत्प्राप्तिः।**
**दानञ्च सिद्धयोऽष्टौ सिद्धेः पूर्व्वोऽङ्कुशस्त्रिविधः ॥५१॥**

विहन्यमानस्य(३) दुःखस्य त्रित्वाद्विघातास्त्रय इति इमा मुख्याः तिस्रः सिद्धयस्तदुपायतया त्वितरा गौण्यः पञ्च सिद्धय-

---

(१) उत्तममुत्कृष्टम् अम्भः। अम्भसोऽङ्कुरं प्रति हेतुत्ववत् विवेकख्याति-हेतुत्वात् तस्य उत्तमाम्भस्त्वम्।

(२) अन्येच्छानधीनेच्छाविषयत्वम्, मुख्यत्वम् अन्येच्छाधीनेच्छाविषयत्वं गौणत्वम् भवति च दुःखविघातेच्छया तदुपाये वेदाध्ययनेच्छा इत्यतो वेदाध्ययनादे गौणत्वम्।

(३) ऊहादेः साधनरूपतया साध्यरूपमुख्यसिद्धिमपहाय प्रथमं तद्व्याख्यामनुचितमिति पाठक्रममनादृत्य कारिकां व्युत्क्रमेण व्याचष्टे विहन्यमानस्येत्यादि। ध्वंसरूपस्य विघातस्याविशेषात् तत्प्रतियोगिविशेष-मादाय तस्य त्रिविधत्वमिति दर्शयन्नाह दुःखस्य त्रित्वादिति।

यस्ता अपि(१) हेतुहेतुमत्तया व्यवस्थिताः। तास्वाद्या(२) अध्ययनलक्षणा सिद्धिर्हेतुरेव, मुख्यास्तु हेतुमत्यः। विधिवद्गुरुमुखादध्यात्मविद्यानामक्षरस्वरूपग्रहणमध्ययनं प्रथमा सिद्धिस्तारमुच्यते (३) तत्कार्य्यं शब्दः, शब्द इति पदं (४) शब्दजनितमर्थज्ञानमुपलक्षयति कार्य्ये कारणोपचारात्मा द्वितीया सिद्धिः सुतार (५) मुच्यते तदिदं द्विधा(६)

(१) ताः सिद्धयः हेतुहेतुमत्तया व्यवस्थिताः काचित् हेतुरूपा काचित कार्य्यरूपा काचित् कार्य्यकारणोभयरूपा इत्यर्थः।

(२) तासु सिद्धिषु मध्ये यथोक्तलक्षणमध्ययनं हेतुरेव इतरास्तु सिद्धयः कार्य्यकारणोभयरूपाः काञ्चिदपेक्ष्य तासां कार्य्यत्वं काञ्चिदपेक्ष्य च कारणत्वम्। मुख्यसिद्धयस्तु कार्य्यमात्ररूपा एवेति विवेकः।

(३) तारयति संसारार्णवादिति तस्याः तारत्वम्।

(४) शब्दस्याध्ययनकार्य्यत्वाभावेन शब्दपदं शब्दजन्यार्थज्ञानलक्षकमित्याह शब्द इति पदमिति। "स्वाध्यायोऽध्येतव्य" इत्यध्ययनविधौ अध्ययनपदं न अक्षरग्रहणमात्रपरमपि तु अर्थज्ञानार्थकाध्ययनपरमित्याशयेनाध्ययनस्यार्थज्ञानहेतुत्वमुक्तमिति द्रष्टव्यम्।

(५) "तमेतं ब्राह्मणा विविदिषन्ति वेदानुवचनेनेत्यादि" श्रुत्या वेदार्थज्ञानस्य विवेकख्यातिहेतुत्वप्रतिपादनात् तस्य च संसारहेतुभूताज्ञाननिवर्त्तनद्वारा संसारार्णव तारकत्वात् सुतारत्वम्।

(६) "आत्मा वा अरे द्रष्टव्यः श्रोतव्य" इत्यादिश्रुत्या आत्मश्रवणस्यैव विवेकख्यातौ हेतुत्वप्रतिपादनेन वेदाध्ययनतदर्थज्ञानस्य कया प्रणाल्या विवेकख्यातिहेतुत्वं स्यादित्याशङ्क्य श्रवणपदस्यैव अध्ययनतदर्थज्ञानलक्षक-

श्रवणम् । ऊहस्तर्कः(१) आगमाविरोधन्यायेनागमार्थपरीक्षणम् संशयपूर्वपक्ष(२) निराकरणेनोत्तरपक्षव्यवस्थापनं तदिदं मननमाचक्षते आगमिनः। सा तृतीया सिद्धिस्तारतार(३) मुच्यते। स्वोत्प्रेक्षितं मननममनन(४) मेवाम्नहृत् सम्मतमिति द्वितीयं मननमाह सुहृत्प्राप्तिरिति। न्यायेन हि स्वयं परीक्षितमप्यर्थं न श्रद्दधते न यावद्गुरुशिष्यसब्रह्मचारिभिः सह संवाद्यते, अतः सुहृदां गुरुशिष्यसब्रह्मचारिणां संवादकानां प्राप्तिः सुहृत्प्राप्तिः सा सिद्धिश्चतुर्थी

तमित्याह द्विधा श्रवणमिति। आत्मप्रतिपादकशब्दश्रवणं तदर्थज्ञानञ्चेति द्विविधमिह श्रुतिवाक्ये श्रवणशब्दार्थ इति भावः।

(१) "अध्याहार स्तर्क ऊह" इत्यनुशासनात् ऊहशब्दार्थमाह तर्क इति तर्कस्तर्कसाध्यमनुमानमित्यर्थः प्रथमं शब्दार्थश्रवणे तत्र संशयोदयस्ततो वादिविप्रतिपत्तिनिराकरणपूर्व्वकं परीक्षणं स्यादिति अध्ययनस्यार्थज्ञानहेतुत्वं तदर्थज्ञानस्य च तर्कशब्दोऽत्रानुमानहेतुत्वमिति तयोः कार्य्यकारणभावः।

(२) संशयपूर्व्वपक्षेत्यादिः "एकमेवाद्वितीयमित्यादि"श्रुत्या "द्वा सुपर्णा सयुजा सखाया समानवृक्षं परिषस्वजाते। तयोरन्यः पिप्पलं स्वाद्वत्ति अन्यो ह्यनश्नन्नभिचाकशीति" श्रुत्या च आत्मनएकत्वानेकत्वसंशये तत्रा एकत्वपरतारूपः वेदान्तिपूर्व्वपक्षः, वैधर्म्यलक्षणभेदराहित्यरूपमद्वैतं न तु वास्तवमिति साङ्ख्यसिद्धान्तः तदर्थप्रपञ्चनायैव सर्व्वं शास्त्रं प्रवृत्तं तथा च मननात्मकमेवेदं शास्त्रं विवेकख्यातिजननार्थमाश्रयणीयमिति भाव.।

(३) तारयतीति तारं तारप्रकारस्तारतारं प्रकारे द्वित्वम्।

(४) अमननमप्रामाण्यज्ञानास्कन्दितत्वात्।

रम्यक(१) मुच्यते। दानञ्च शुद्धिर्विवेकज्ञानस्य, दैप शोधने इत्यस्माद्धातोर्दानपदव्युत्पत्तेः। यथाह भगवान् पतञ्जलि "विवेकख्यातिरविप्लवा दुःखत्रयस्य हानोपाय,, इति अविप्लवा शुद्धिः सा च सवासनसंशयविपर्य्यासानां परिहाण्या विवेक-साक्षात्कारस्य स्वच्छप्रवाहेऽवस्थानम्। सा च निविड़ादेव नैर-न्तर्य्यदीर्घकालादरसेविताभ्यासपरिपाकाद्भवतीति दानेन विवे-कख्यात्या कार्य्येण सोऽपि(२) संगृहीतः। सेयं पञ्चमी सिद्धिः सदामुदित(३) मुच्यते। तिस्रश्च मुख्याः सिद्धयः प्रमोद(४) मुदितमोदमाना इत्यष्टौ सिद्धयः। अन्ये व्याचक्षते विनोपदे-शादिना प्राग्भवीयाभ्यासवशात्तत्त्वस्य स्वयमूहनं यत् सा सिद्धि रूहः। यस्य सांख्यशास्त्रपाठमन्यदीयमाकर्ण्य तत्त्वज्ञानमुत्प-द्यते सा सिद्धिः शब्दः शब्दपाठानन्तरभावात्। यस्य शिष्या-

---

(१) रमतेऽत्र अधिकरणे यत् ततः स्वार्थे कन्।

(२) सोऽपि तादृशाभ्यासपरिपाकोऽपि कार्य्येण कारणग्रहणस्यान्यत्र दृष्टत्वादत्र तथा कल्पनम्।

(३) मुदितमिति भावे क्तः सदा मुदितं मोदोयत्र।

(४) व्याख्यातानामपि दुःखविघातरूपमुख्यसिद्धीनां संज्ञाविशेषकथना-याह प्रमोदेत्यादि। प्रकर्षेण मोदो यत्र प्रमोदः आध्यात्मिकदुःखविघा-तस्य सर्व्वोत्कर्षेणेष्टत्वात् तथात्वम्। आधिभौतिकदुःखविघातस्य मुदितत्वं तु मोदाधारत्वादवसेयम्। आधिदैविकदुःखविघातस्य मोदमानत्वं मोदस्य मानं भानं यत्रेति व्युत्पत्त्यावधेयम्।

चार्य्यसंबन्धेन संवादेन सांख्यशास्त्रं ग्रन्थतोऽर्थतश्चाधीत्य ज्ञानमुत्पद्यते साध्ययनहेतुका सिद्धिरध्ययनम्, सुहृत्प्राप्तिरिति यस्याधिगततत्त्वं सुहृदं प्राप्य ज्ञानमुत्पद्यते सा ज्ञानलक्षणा सिद्धिस्तस्य सुहृत्प्राप्तिः। दानञ्च सिद्धिहेतुः धनादिदानाराधितो ज्ञानी ज्ञानं प्रयच्छति। अस्य च युक्तायुक्तत्वे(१) सूरिभिरेवावगन्तव्ये इति कृतं परदोषोद्भावनेन नः सिद्धान्तमात्रव्याख्यानप्रवृत्तानामिति। सिद्धितुष्टिविपर्य्ययेणाशक्तिर्बुद्धिवधः(२) सप्तदशधा द्रष्टव्यः। अत्र प्रत्ययसर्गे सिद्धिरुपादेयेति प्रसिद्धमेव। तन्निवारणहेतवस्तु विपर्य्ययाशक्तितुष्टयो हेया इत्याह सिद्धेः पूर्व्वोऽङ्कुशस्त्रिविधः। पूर्व्व इति विपर्य्ययाशक्तितुष्टीः(३) परामृशति

(१) लौकिकहेतुं परित्यज्य जन्मान्तरीणहेतुकल्पनमन्याय्यमिति तन्मते आद्यसिद्धेरयुक्तत्वम् शब्दश्रवणस्य ज्ञानहेतुत्वेऽपि सङ्केतविशेषज्ञानं विनार्थविशेषानवधारणात् अन्यदीयपाठश्रवणमात्रात् कथं ज्ञानसम्भव इति अर्थज्ञानपूर्व्वकाध्ययनस्यैव हेतुत्वमुचितमिति शब्दरूपसिद्धेः शब्दपाठरूपत्वमयुक्तम्। एवं ज्ञानिनो धनादिना तोषस्याप्यनुचितत्वमिति परमतेऽयुक्तत्वं बोध्यम्।

(२) सिद्धीनामष्टविधत्वात् तुष्टीनां नवविधत्वात् तासां विपर्य्ययाणामपि मिलित्वा सप्तदशविधत्वं बुद्धेरशक्तिरूपवधस्येत्यवसेयम्।

(३) पूर्व्वः कारणभूतस्त्रिविधः तिस्रो विपर्य्ययाशक्तितुष्टिरूपा विधा यस्य तथाभूतः तथा च ता एव अङ्कुशभूताः सिद्धिपरिपन्थित्वादित्याशयेन व्याचष्टे विपर्य्ययेत्यादि।

ताः सिद्धिकारणानामङ्कुशो निवारकत्वात् अतः सिद्धिपरिपन्थित्वात् अङ्कुश इवेति विपर्य्ययाशक्तितुष्ट्यो ज्ञेया (१) इत्यर्थः ॥५१॥

स्यादेतत्पुरुषार्थप्रयुक्ता सृष्टिः स च पुरुषार्थः प्रत्ययसर्गाद्वा तन्मात्रसर्गाद्वा सिध्यतीति कृतमुभयसर्गेणेत्यत आह ।

**न विना भावैर्लिङ्गं न विना लिङ्गेन भावनिर्वृत्तिः ।**
**लिङ्गाख्योभावाख्यस्तस्माद्द्विविधः प्रवर्त्तते सर्गः॥५२॥**

लिङ्गमिति तन्मात्रसर्गमुपलक्षयति भावैरिति च प्रत्ययसर्गम् । एतदुक्तं भवति तन्मात्रसर्गस्य पुरुषार्थसाधनत्वस्वरूपस्य न प्रत्ययसर्गाद्विना भवति एवं प्रत्ययसर्गस्य स्वरूपं पुरुषार्थसाधनत्वञ्च न तन्मात्रसर्गादृते इत्युभयथा सर्गप्रवृत्तिः । भोगः पुरुषार्थो न भोग्यान् शब्दादीन् भोगायतनञ्च शरीरद्वयमन्तरेण (२) सम्भवतीति उपपन्नस्तन्मात्रसर्गः । एवं स एव

(१) सिद्धिपरिपन्थित्वोक्त्या च तासां हेयत्वमर्थायातमित्याह हेया इति ।

(२) स्थूलशरीरमात्रस्य भोगायतनत्वे मृतशरीरेऽपि भोगापत्तिः लिङ्गशरीरमात्रस्य आधारं विना स्थितेरयोग्यत्वादुभयशरीराभ्युपगमः । किञ्च "शास्त्रदेशितं फलमनुष्ठातरीति" न्यायेनान्यकृतकर्मणोन्यभोगासम्भवेन स्थूलशरीरस्य च परलोके गमनासम्भवेन अमूर्त्तगामिनो लिङ्गशरीरस्य स्वीकारः न च पुरुषस्य कर्त्तृत्वं भोक्तृत्वं वा तात्त्विकं सम्भवति असङ्गत्वेन तस्य तथात्वाभावात् ।

भोगोभोगसाधनानीन्द्रियाणि चान्तःकरणानि चान्तरेण न सम्भवति न च तानि धर्म्मादीन्(१) भावान् विना सम्भवन्ति न चापवर्गहेतुर्विवेकख्यातिरुभयसर्गं विनेत्युपपन्न उभयविधः सर्गः। अनादित्वाच्च वीजाङ्कुरवन्नान्योन्याश्रयदोषमावहति कल्पादावपि प्राचीन(२ कल्पोत्पन्नभावलिङ्गसंस्कारवशाद्भाव-लिङ्गयोरुत्पत्तिर्नानुपपन्नेति सर्वमवदातम् ॥५२॥

विभक्तः प्रत्ययसर्गः। भूतादिसर्गं विभजते।

**अष्टविकल्पो दैवस्तैर्य्यग्योनश्च पञ्चधा भवति।**
**मानुष्यश्चैकविधः समासतो भौतिकः सर्गः ॥५३॥**

ब्राह्मप्राजापत्यैन्द्रपैत्र्यगान्धर्वयाक्षराक्षसपैशाचाइत्यष्टविधो दैवः(३)सर्गः। तैर्य्यग्योनश्च पञ्चधा भवति पशुमृगपक्षिसरीसृप-स्थावरा(४) इति मानुष्यश्चैकविधःब्राह्मणत्वाद्यवान्तरभेदा-

(१)। कारिकास्थभावशब्दं भङ्ग्या व्याचष्टे धर्म्मादीनिति।

(२) सृष्टिप्रवाहस्यानादित्वात् प्राचीनकल्पेत्युक्तम्।

(३) गन्धर्व्वादीनां देवयोनित्वात् दैवत्वम्।

(४) तिर्य्यग्योनौ भवः तैर्य्यग्योन अण्। पश्वादीनामविस्पष्टव्यवहारित्वात् अस्फुटचैतन्यत्वात् सर्व्वार्थानुभवशून्यत्वात् पापाधीनजन्मवत्त्वाच्च तैर्य्यग्योनत्वम्।

विवक्षया, संस्थानस्य (१) चतुर्ष्वप्यविशेषादिति समासतः संक्षेपतो भौतिकः सर्गः। घटादयस्त्वशरीरत्वेऽपि(२) स्थावरा एवेति ॥५३॥

भौतिकस्यास्य सर्गस्य चैतन्योत्कर्षनिकर्षतारतम्याभ्यामूर्द्धाधोमध्यभावेन त्रैविध्यमाह।

**ऊर्द्ध्वं सत्त्वविशालस्तमोविशालश्च मूलतः सर्गः।**
**मध्ये रजोविशालो ब्रह्मादिस्तम्बपर्यन्तः ॥५४॥**

ऊर्द्ध्वं सत्त्वविशालो द्युप्रभृतिः सत्यान्तो लोकः सत्त्वबहुलः(३) तमोविशालश्च मूलतः सर्गः पश्वादिः स्थावरान्तः, सोऽयं मोहमयत्वात्तमोबहुलः (४)। भूर्लोकस्तु सप्तद्वीपसमुद्रसन्निवेशो

---

(१) संस्थानस्य अवयवविशेषस्य चतुर्षु पृथिव्यप्तेजोवायुरूपभूतेषु अविशेषात् तुल्यरूपेण दर्शनात् भौतिकः भूतनिर्वृत्तः सर्गः तथाचाकाशस्य संस्थानविशेषाभावेन न तत्कृतः भौतिकः सर्गः इति भावः।

(२) चेष्टावदन्त्यावयवित्वं शरीरत्वं घटादीनान्तु अन्त्यावयवित्वेऽपि चेष्टाशून्यत्वादशरीरत्वम्। चेष्टाशून्यत्वात् स्वतोऽक्रियत्वाच्च स्थावरत्वम्, वायोस्तु सततक्रियावत्त्वेऽपि चेष्टाशून्यत्वात् न शरीरवत्त्वं तस्य तु स्थावरत्वं नेति विशेषः।

(३) सत्त्वबहुलः सुखबाहुल्यात् सत्त्वोत्कर्षबहुलः।

(४) तमोबहुलः तमोगुणमोहाश्रयत्वात्।

मध्ये(१) रजो विशालः(२) धर्म्माधर्म्मानुष्ठानपरत्वाद्दुःखबहुलत्वाच्च तदनेन लोकसंस्थितिं संक्षिपति ब्रह्मादिस्तम्बपर्य्यन्तः(३) स्तम्बग्रहणेन वृक्षादयः सङ्गृहीताः ॥५४॥

तदेवं सर्गं दर्शयित्वा तस्यापवर्गसाधनवैराग्योपयोगिनीं दुःखरूपतामाह ।

**तत्र जरामरणकृतं दुःखं प्राप्नोति चेतनः पुरुषः ।**
**लिङ्गस्याविनिवृत्तेस्तस्माद्दुःखं स्वभावेन ॥५५॥**

तत्र शरीरादौ यद्यपि विविधा विचित्रानन्दभोगभागिनः प्राणभृद्भेदा(४) स्तथापि सर्वेषां जरामरणकृतं दुःखमविशिष्टं सर्व्वस्य खलु कृमेरपि मरणत्रासो मा नभूवम्, भूयासमित्येवमात्मकोऽस्ति । दुःखं च भयहेतुरिति मरणं दुःखम् । स्यादे-

---

(१) रजःकार्य्यप्रवृत्तिरूपधर्म्माधर्म्मानुष्ठानबाहुल्यात् रजोविशालत्वम् ।

(२) सत्त्वोत्कृष्टसात्त्विकज्ञानसुखादिमत्त्वात् ब्रह्मणो हिरण्यगर्भस्य प्राधान्यात् आदित उक्तिः स्तम्बादीनान्तु ज्ञानशून्यत्वादन्ते उक्तिरिति बोध्यम् ।

(३) वृक्षादीनां यद्यपि निकृष्टचैतन्यमस्त्येव तथापि तेषां विशेषज्ञानाभावात् स्तम्बसादृश्येन स्तम्बपदेनैव तेषां ग्रहणमित्याह वृक्षादय इति ।

(४) प्राणभृद्भेदा राजप्रभृति मनुष्यादयः तथा च तेषां सुखातिशयभागित्वेऽपि सर्वेषां जरामरणकृतं दुःखमस्त्येवेत्यात्रविशिष्टमिति अन्यस्य दुःखस्य प्राणिमात्रासाधारण्येऽपि एतद्दुःखस्य सर्वप्राणिसाधारण्यात्ततो वैराग्यसम्भव इति भावः ।

तत् दुःखादयः प्राकृता बुद्धिगुणास्तत्कथमेते चेतनसम्बन्धिनो-भवन्तीत्यत आह पुरुष इति पुरि लिङ्गे शेते पुरुषः लिङ्गञ्च तत्सम्बन्धीति चेतनोऽपि तत्सम्बन्धी(१) भवतीत्यर्थः। कुतः पुनर्लिङ्गसम्बन्धि दुःखं पुरुषस्य चेतनस्येत्यत आह लिङ्गस्या-विनिवृत्तेः पुरुषाद्भेदाग्रहाल्लिङ्गधर्म्मानात्मन्यध्यवस्यति पुरुषः। अथ वा दुःखप्राप्तावधिः आङा कथ्यते लिङ्गं यावन्न निवर्त्तते तावदिति॥५५॥

उक्तस्य सर्गस्य कारणविप्रतिपत्तीर्निराकरोति।

**इत्येष प्रकृतिकृतोमहदादिविशेषभूतपर्य्यन्तः।**
**प्रतिपुरुषविमोक्षार्थं स्वार्थइव परार्थ आरम्भः॥५६॥**

आरभ्यतइत्यारम्भः सर्गः महदादिभूतः प्रकृत्यैव कृतो नेश्वरेण न ब्रह्मोपादानो नाप्यकारणः। अकारणत्वे ह्यत्यन्त-भावोऽत्यन्ताभावो वा(२) भवेत्। न ब्रह्मोपादानः(३) चिति

(१) तत्सम्बन्धि दुःखसम्बन्धि। इति अतः लिङ्गे दुःखसम्बन्धात् चेतनः पुरुषस्तत्सम्बन्धी दुःखसम्बन्धीत्यर्थः।

(२) अकारणत्वे कारणशून्यत्वे अत्यन्तभावः नित्यत्वं स्यात्। अत्यन्ता-भावः उत्पत्तौ कारणाभावात् शशविषाणादिवत् तुच्छत्वं स्यादित्यर्थः।

(३) ब्रह्मणस्तदुपादानत्वं न सम्भवति चिद्रूपस्य तस्य कूटस्थत्वात् परिणा-मिन एव कार्य्योपादानत्वादित्याह न ब्रह्मोपादान इति। इदमुपलक्षणम् एकस्य विचित्रनानाविधकार्य्योपादानत्वासम्भवस्य। प्रकृतेस्तु परिणामित्वात् नानात्वाच्च तथात्वसम्भव इति भावः।

शक्तेरपरिणामात्। नेश्वराधिष्ठितप्रकृतिकृतः(१) निर्व्यापारस्याधिष्ठातृत्वासम्भवात्(२) न हि निर्व्यापारस्तक्षा वास्याद्यधितिष्ठति। ननु प्रकृतिकृतश्चेत्तस्या नित्यायाः प्रवृत्तिशीलाया अनुपरमात्सदैव सर्गः स्यादिति न कश्चिन्मुच्येत इत्यत आह प्रतिपुरुषविमोक्षार्थं स्वार्थ इव परार्थ आरम्भः यथौदनकाम ओदनाय पाके प्रवृत्त ओदनसिद्धौ निवर्त्तते एवं प्रत्येकं पुरुषान्मोचयितुं प्रवृत्ता प्रकृतिर्यं पुरुषं मोचयति तं प्रति न पुनः प्रवर्त्तते तदिदमाह स्वार्थ इव स्वार्थे यथा तथा परार्थे आरम्भ इत्यर्थः॥ ५६॥

स्यादेतत्स्वार्थं परार्थं वा चेतनः प्रवर्त्तते न च प्रकृतिरचेतनैवं भवितुमर्हति तस्मादस्ति प्रकृतेरधिष्ठाता चेतनः; न च

(१) एवं वेदान्तिमतं निराकृत्य पातञ्जलमतं निराकर्त्तुमाह नेश्वराधिष्ठित प्रकृति कृत इति।

(२) प्रकृतेः परिणामित्वेन जड़तया स्वतः प्रवृत्त्यसम्भवात् चेतनेश्वराधिष्ठानादेव तत्प्रवृत्तिरिति तेषां सिद्धान्तस्तं दूषयितुं हेतुमाह निर्व्यापरस्येत्यादि। तथा हि किमिदमधिष्ठातृत्वं किं प्रकाशकत्वमाहोस्वित् प्रवर्त्तकत्वम्। नाद्यः मोक्षदशायामपि प्रकाशकत्वानपायात् तदानीमपि प्रकृतेः स्वकार्य्यरूपेण परिणामरूपप्रवृत्त्यापत्तेः। द्वितीयपक्षेऽपि स्वव्यापारेणेतरव्यापारजनकत्वात्, सन्निधिमात्राद्वा प्रवर्त्तकत्वं तत्राद्यं प्रत्याह निर्व्यापारस्येति। न द्वितीयः सन्निधिमात्रात् प्रवर्त्तकत्वे घटादौ रासभादीनामिव अन्यथासिद्धानां प्रवर्त्तकत्वापत्तेरिति भावः।

क्षेत्रज्ञाः चेतना अपि प्रकृतिमधिष्ठातुमर्हन्ति तेषां प्रकृति-स्वरूपानभिज्ञत्वात् तस्मादस्ति सर्व्वार्थदर्शी प्रकृतेरधिष्ठाता स चेश्वर इत्यत आह।

**वत्सविवृद्धिनिमित्तं क्षीरस्य यथा प्रवृत्तिरज्ञस्य।**
**पुरुषविमोक्षनिमित्तं तथा प्रवृत्तिः प्रधानस्य॥५७॥**

दृष्टमचेतनमपि प्रयोजने प्रवर्त्तमानं यथा वत्सविवृद्धये क्षीरमचेतनं प्रवर्त्तते एवं प्रकृतिरचेतनापि पुरुषविमोक्षणाय प्रवर्त्तिष्यते। न च क्षीरप्रवृत्तेरपीश्वराधिष्ठाननिबन्धनत्वेन साध्यत्वान्न साध्येन व्यभिचार इति साम्प्रतं प्रेक्षावत्प्रवृत्तेः(१) स्वार्थकारुण्याभ्यां व्याप्तत्वात् ते च जगत्सर्गाद्व्यावर्त्तमाने प्रेक्षावत्प्रवृत्तिपूर्व्वकत्वमपि व्यावर्त्तयतः नह्यवाप्तसकलेप्सितस्य भगवतोजगत्सृजतः किमप्यभिलषितं भवति नापि कारुण्यादस्य सर्गे प्रवृत्तिः प्राक् सर्गाज्जीवानामिन्द्रियशरीरविषयानु-

(१) समीक्ष्यकारित्वं प्रेक्षावत्त्वम्। अत्रायं प्रयोगः प्रेक्षावत्प्रवृत्तिः, स्वार्थसाधनप्रयोज्या, परदुःखपरिहारेच्छारूपकारुण्यप्रयोज्या वा भवितुमर्हति प्रेक्षावत्प्रवृत्तित्वात् सम्प्रतिपन्नवदिति। तत्र च ईश्वरस्य जगत्सर्गः न स्वार्थसाधनप्रयोज्यः आप्तकामत्वेन स्वार्थप्रार्थनाशून्यत्वात् नापि कारुण्यप्रयोज्यः सर्गादौ दुःखस्यैवाभावात् कुतस्तत्प्रहाणेच्छा इत्येतत् मनसि निधायाह प्रेक्षावत्प्रवृत्तेरिति। तथा च व्यापकाभावाद्व्याप्याभावस्य सिद्धत्वान्न तथा सम्भव इति भावः।

त्पत्तौ दुःखाभावेन कस्य प्रहाणेच्छा कारुण्यं, सर्गोत्तरकालं दुःखिनोऽवलोक्य कारुण्याभ्युपगमे दुरुत्तरमितरेतराश्रयत्वं कारुण्येन सृष्टिः सृष्ट्या च कारुण्यमिति । अपि च करुणया प्रेरितः ईश्वरः सुखिन एव जन्तून् सृजेन्न विचित्रान् । कर्म्मवैचित्र्यात् वैचित्र्यमिति चेत् कृतमस्य प्रेक्षावतः कर्म्माधिष्ठानेन तदनधिष्ठानमात्रादेवाचेतनस्यापि कर्मणः प्रवृत्त्युपपत्तेस्तत्कार्य्यशरीरेन्द्रियविषयानुत्पत्तौ दुःखानुत्पत्तेरपि सुकरत्वात् । प्रकृतेस्त्वचेतनायाः प्रवृत्तेर्न स्वार्थानुग्रहो(१)न कारुण्यं प्रयोजकमिति नोक्तदोषप्रसङ्गावतारः । पारार्थ्यमात्रन्तु प्रयोजनमुपपद्यते तस्मात्सुष्ठूक्तं वत्सविवृद्धिनिमित्तमिति ॥५७॥

स्वार्थइवेति दृष्टान्तितं तद्विभजते ।

**औत्सुक्यनिवृत्त्यर्थं यथा क्रियासु प्रवर्त्तते लोकः ।**
**पुरुषस्य विमोक्षार्थं प्रवर्त्तते तद्वदव्यक्तम् ॥५८॥**

औत्सुक्यमिच्छा सा खल्विष्यमाणप्राप्तौ निवर्त्तते इष्यमाणस्य स्वार्थः इष्टलक्षणत्वात् फलस्य । दार्ष्टान्तिके योजयति पुरुषस्य विमोक्षार्थं प्रवर्त्तते तद्वदव्यक्तम् ॥५८॥

---

(१) अचेतनायाः प्रेक्षावत्त्वाभावात् तत्प्रवृत्तौ स्वार्थानुग्रहः स्वार्थसाधनसंबन्धेन प्रयोजक इति विपरिणामेनान्वयः । नापि कारुण्यं तत्र प्रयोजकम् अचेतनत्वेन तत्र तस्यासम्भवादिति हेतुरध्याहार्य्यः ।

ननु भवतु पुरुषार्थः प्रकृतेः प्रवर्त्तकः निवृत्तिस्तु कुतस्त्या प्रकृतेरित्यत आह।

**रङ्गस्य(१)दर्शयित्वा निवर्त्तते नर्त्तकी यथा नृत्यात्।**
**पुरुषस्य तथात्मानं प्रकाश्य निवर्त्तते प्रकृतिः॥५९॥**

रङ्गस्येति स्थानेन स्थानिनः पारिषदानुपलक्षयति। आत्मानं शब्दाद्यात्मना पुरुषाङ्गेदेन च प्रकाश्ये(२)त्यर्थः॥५९॥

स्यादेतत् प्रवर्त्ततां प्रकृतिः पुरुषार्थं पुरुषादुपकृतात् प्रकृति र्लप्स्यति कञ्चिदुपकारम् आज्ञासम्पादनाराधितादिवाज्ञापयितुर्भुजिष्या(३) तथा च न परार्थोऽस्या आरम्भ इत्यत आह।

**नानाविधैरुपायैरुपकारिण्यनुपकारिणः पुंसः।**
**गुणवत्यगुणस्य सतस्तस्यार्थमपार्थकञ्चरति॥६०॥**

यथा गुणवानप्युपकार्य्यपि भृत्यो निर्गुणे अतएवानुपकारिणि स्वामिनि निष्फलाराधनः एवमियं प्रकृतिस्तपस्विनी(४)

---

(१) रङ्गस्य पुरुषस्येत्युभयत्र समीपे इति शेषः। दर्शयित्वेत्यत्र आत्मानमित्यपकृष्यान्वेति एतत्पक्षे आत्मानं स्वव्यापारं शरीरचेष्टादिकमित्यर्थः।

(२) प्रकाश्य बोधयित्वा।

(३) भुजिष्या परिचारिका। तथाच परिचारिकावत् प्रकृतेः पुरुषकृतोपकारभावान्न सर्गादौ प्रवृत्तिरित्याक्षेपग्रन्थार्थः।

(४) स्वार्थसम्पादनेच्छाशून्यत्वेन औदार्य्यात् तपस्वित्वं प्रकृतेः।

गुणवत्युपकारिण्यप्यनुपकारिणि निर्गुणेऽपि पुरुषे व्यर्थपरिश्रमेति(१) पुरुषार्थमेव यतते न स्वार्थमिति सिद्धम् ॥६०॥

स्यादेतन्नर्त्तकी नृत्यं परिषद्भ्योदर्शयित्वा निवृत्तापि पुनस्तद्दृष्टृकौतूहलात् प्रवर्त्तते यथा,तथा प्रकृतिरपि पुरुषायात्मानं दर्शयित्वा निवृत्तापि पुनः प्रवर्त्स्यतीत्यत आह ।

**प्रकृतेः सुकुमारतरं न किञ्चिदस्तीति मे मतिर्भवति।**
**या दृष्टास्मीति पुनर्न दर्शनमुपैति पुरुषस्य ॥६१॥**

सुकुमारतरता अतिपेशलता परपुरुषदर्शनासहिष्णुतेति यावत् असूर्य्यंपश्या हि कुलवधूः अतिमन्दाक्षमन्थरा (२) प्रमादाद्विगलितसिचयाञ्चला चेदालोक्यते परपुरुषेण, तदासौ तथा प्रयतते अप्रमत्ता यथैनां पुरुषान्तराणि न पुनः पश्यन्तीति एवं प्रकृतिरपि कुलवधूतोऽप्यधिका (३) दृष्टा विवेकेन न पुनर्दृश्यत इत्यर्थः॥६१॥

स्यादेतत्पुरुषश्चेदगुणोऽपरिणामी कथमस्य मोक्षः मुचेर्बन्धनविश्लेषार्थत्वात् सवासनक्लेशकर्म्माशयानाञ्च बन्धनसंज्ञितानां पुरुषेऽपरिणामिन्यसम्भवात् अतएवास्य न संसारः प्रेत्य-

---

(१) व्यर्थपरिश्रमा स्वार्थशून्यत्वेन निष्फलारम्भेत्यर्थः।

(२) अतिमन्दाक्षेणातिलज्जया मन्थरा मन्दव्यापारा प्रमादादनवधानात् विगलितसिचयाञ्चला स्वस्थानच्युतवस्त्राञ्चला।

(३) अधिकसौकुमार्य्यात् अतिलज्जावत्त्वाच्च प्रकृतेराधिक्यम्।

भावापरनामास्ति निष्क्रियत्वात् तस्मात्पुरुषविमोक्षार्थमिति रिक्तं वचः इतीमामाशङ्कामुपसंहारव्याजेनाभ्युपगच्छन्न-पाकरोति।

**तस्मान्न बध्यतेऽसौ न मुच्यते नापि संसरति कश्चित्।**
**संसरति बध्यते मुच्यते च नानाश्रया प्रकृतिः॥६२॥**

अद्धा न कश्चित्पुरुषोबध्यते(१)न कश्चित्संसरति न कश्चि-न्मुच्यत इति। प्रकृतिरेव तु नानाश्रया सती बध्यते च संस-रति च मुच्यते च बन्धमोक्षसंसाराः पुरुषे उपचर्य्यन्ते यथा जयपराजयौ भृत्यगतावपि स्वामिन्युपचर्य्येते तदाश्रयेण भृत्यानां तद्भागित्वात्तत्फलस्य च शोकलाभादेः स्वामिसम्ब-न्धात्। भोगापवर्गयोश्च प्रकृतिगतयोरपि विवेकाग्रहात् पुरुष-सम्बन्ध उपपादित इति सर्वं पुष्कलम्॥६२॥

नन्वगतं प्रकृतिगता बन्धसंसारापवर्गाः पुरुष उपचर्य्यन्त-इति किं साधनाः पुनरेते प्रकृतेरित्यत आह।

---

(१) पाठक्रममनादृत्य बन्धसंसारमोक्षाणां क्रमिकत्वादर्थक्रमादरेण व्या-चष्टे बध्यते इति अविद्याधीनप्रकृतिसंयोगोहि अतात्त्विकः पुरुषस्यबन्धः तन्मूलक एव प्रेत्यभावनामा संसारः वैराग्येण तत्त्वसाक्षात्कारात् ततोमोक्ष इत्यवमेषां क्रमिकत्वमिति द्रष्टव्यम्।

**रूपैः सप्तभिरेव तु बध्नात्यात्मानमात्मना प्रकृतिः।**
**सैव च पुरुषार्थं प्रति विमोचयत्येकरूपेण ॥६३॥**

तत्त्वज्ञानवर्जं बध्नाति धर्म्मादिभिः सप्तभिः(१) रूपैर्भावैरिति पुरुषार्थं प्रति भोगापवर्गं प्रति आत्मनात्मानमेकरूपेण तत्त्वज्ञानेन विवेकख्यात्या विमोचयति पुनर्भोगापवर्गौ न करोतीत्यर्थः॥ ६३ ॥

अवगतमीदृशं तत्त्वं ततः किमित्यतआह।

**एवं तत्त्वाभ्यासान्नास्मि न मे नाहमित्यपरिशेषम्।**
**अविपर्ययाद्विशुद्धं केवलमुत्पद्यते ज्ञानम् ॥६४॥**

तत्त्वेन विषयेण विषयि ज्ञानमुपलक्षयति उक्तरूपप्रकारतत्त्वविषयज्ञानाभ्यासादादरनैरन्तर्य्यदीर्घकालसेवितात्सत्त्वपुरुषान्यतासाक्षात्कारि ज्ञानमुत्पद्यते यद्विषयस्याभ्यासस्तद्विषयमेव साक्षात्कारमुपजनयति तत्त्वविषयश्चाभ्यासइति तत्त्वसाक्षात्कारं जनयति अत उक्तं विशुद्धमिति। कुतोविशुद्धमित्यत आह अविपर्य्ययादिति संशयविपर्य्ययौ हि ज्ञानस्याविशुद्धी तद्रहितं विशुद्धं तदिदमुक्तमविपर्य्ययादिति नियतमनियततया(१४)

---

(१) धर्म्माधर्म्मैश्वर्य्यानैश्वर्य्यवैराग्यावैराग्याज्ञानरूपैः सप्तभिः।

(२) नियतम् स्वाभाव्यात् नियमेन एकरूपं वस्तु अनियततया इदमित्थं न वेति भावाभावरूपतया स्पृशन् विषयीकुर्व्वन् संशयः अनियततया-

ग्टह्लन् संशयोऽपि विपर्य्ययः तेनाविपर्य्ययादिति संशयविपर्य्ययाभावो(१)दर्शितः तत्त्वविषयत्वाच्च संशयविपर्य्ययाभावः। स्यादेतदुत्पद्यतामीदृशाभ्यासात्तत्त्वज्ञानं तथाप्यनादिना मिथ्याज्ञानसंस्कारेण मिथ्याज्ञानं जनयितव्यं तथा च तन्निबन्धनस्य संसारस्यानुच्छेदप्रसङ्ग इत्यत उक्तं केवलं—विपर्य्ययेणासम्भिन्नम्। यद्यप्यनादिविपर्य्ययवासना(२) तथापि तत्त्वज्ञानवासनया तत्त्वविषयसाक्षात्कारमादधत्यादिमत्यापि शक्या समुच्छेत्तुं, तत्त्वपक्षपातो हि धियां स्वभावः यथाहुः बाह्या(३) अपि "निरुपद्रवभूतार्थस्वभावस्य(४) विपर्य्ययैः। न बाधोयत्न-

---

ह्नित्वात् स्वाभावग्राह्नित्वेन विपर्य्ययः भ्रमात्मकज्ञानतुल्यः। तथा च पर्वतो वह्निमान्नवेति संशयः स्वभावात् वह्निमन्तं पर्वतं वह्निमत्त्वतदभावत्त्वेन विषयीकुर्वन् वह्न्यभावविषयकत्वात् भ्रमतुल्यः। एवमन्यत्राप्यूह्यम्।

(१) संशयः एकधर्मिकः भावाभावविषयकः ज्ञानं, विपर्य्ययः तदभाववति तत्प्रकारकज्ञानं तयोरभाव इत्यर्थः।

(२) विपर्य्ययवासना मिथ्याज्ञानजन्यः संस्कारः।

(३) बाह्याः बाह्यार्थमात्रदर्शिनोऽनात्मज्ञा इति यावत्।

(४) यत्नवत्त्वेऽपि दोषविशेषसहकारित्वेऽपि विपर्य्ययैः अयथार्थविषयावगाहकैरपि निरुपद्रवं दोषादिरूपप्रतिबन्धशून्यं यत् भूतं यथार्थं वस्तु तदेव अर्थो विषयो यस्य भावप्रधाननिर्द्देशः। दोपशून्ययथार्थविषयकत्वमित्यर्थः तद्रूपस्य स्वभावस्य उभयप्राप्तौ कर्म्मणि षष्ठी। न बाधः न बाधनं यदित्यध्याहार्य्यं तत् बुद्धेः पक्षपाततः स्वभावात्मकस्य यथार्थविषयकत्वानतिरेकरूपस्य पक्षस्य पातः अवश्यप्रवणता तस्मादित्यर्थः।

धर्म्मोऽपि बुद्धेरस्योपाततइति,,। ज्ञानस्वरूपमुक्तं नास्मि न मे नाहमिति नास्मीत्यात्मनि क्रियामात्रं निषेधति यथाहुः "कृभ्वस्तयः क्रियासामान्यवचना,, इति। तथाचाध्यवसायाभिमानसङ्कल्पालोचनानि चान्तराणि बाह्याश्च सर्व्वे व्यापारा आत्मनि प्रतिषिद्धानि बोद्धव्यानि यतश्चात्मनि व्यापाराविशेषोनास्त्यतोनाहम्, अहमिति कर्तृपदम्, अहं जानाम्यहं जुहोम्यहं ददेऽहं भुञ्जे इति सर्व्वत्र कर्त्तुः(१) परामर्शात्। निष्क्रियत्वे च सर्व्वकर्तृत्वाभावः ततः सुष्ठूक्तं नाहमिति अतएव न मे, कर्त्ता हि स्वामितां लभते तदभावात्तु कुतः स्वाभाविकी स्वामितेत्यर्थः। अथ वा नास्मीति पुरुषोऽस्मि न प्रसवधर्म्मा अप्रसवधर्म्मत्वाच्चाकर्तृत्वमाह नाहमिति। अकर्तृत्वाच्च न स्वामितेत्याह न मे इति। नन्वेतावत्सु ज्ञातेष्वपि कश्चित्कदाचिदज्ञातोविषयोऽस्ति तदज्ञानञ्च जन्तून् बन्धयिष्यतीत्यत आह अपरिशेषमिति नास्ति किञ्चिदस्मिन् परिशिष्टं ज्ञातव्यं यदज्ञानं बन्धयिष्यतीत्यर्थः॥ ६४॥

किं पुनरीदृशेन तत्त्वसाक्षात्कारेण सिध्यतीत्यत आह।

**तेन निवृत्तप्रसवामर्थवशात्सप्तरूपविनिवृत्ताम्।**
**प्रकृतिं पश्यति पुरुषः प्रेक्षकवदवस्थितः सुस्थः॥६५॥**

भोगविवेकसाक्षात्कारौ हि प्रकृतेः प्रसोतव्यौ तौ च प्रसू-

---

(१) कर्तुः अहं पदेनेति शेषः परामर्शात् उपस्थापनात्।

ताविति नाम्नाः प्रणेतव्यमवशिष्यते यत् प्रणेष्यतइति निवृत्तप्रसवा प्रकृतिः। विवेकज्ञानरूपोयोऽर्थस्तस्य वशः सामर्थ्यं तस्मात्, अतत्त्वज्ञानपूर्व्वकाणि खलु धर्म्माधर्म्माज्ञानवैराग्यावैराग्यैश्वर्य्यानैश्वर्य्याणि, वैराग्यमपि केवलतौष्टिकानाम्(१) अतत्त्वज्ञानपूर्वकमेव तत्र तत्त्वज्ञानं विरोधित्वेनातत्त्वज्ञानमुच्छिनत्ति कारणनिवृत्त्या च सप्त रूपाणि(२) निवर्त्तन्ते इति सप्तरूपविनिवृत्ता प्रकृतिः। अवस्थितइति निष्क्रियः,सुस्थ इति रजस्तमोवृत्तिकलुषया बुद्ध्या असम्भिन्नः(३) सात्विक्या तु बुद्ध्या तदाप्यस्य मनाक् सम्भेदो(४)ऽस्त्येव अन्यथैवम्भूतप्रकृतिदर्शनानुपपत्तेरिति॥ ६५॥

स्यादेतन्निवृत्तप्रसवामिति न स्थ्यामहे संयोगकृतोहि स इत्युक्तं(५) योग्यता च संयोगः भोक्तृत्वयोग्यता च पुरुषस्य

(१) केवलतौष्टिकानाम् आत्मानात्मविवेकाभावेऽपि प्रकृत्यादिसाक्षात्कारेण कृतकृत्यंमन्यमानानाम्।

(२) धर्म्माधर्म्मादीनां प्रागुक्तानां सप्तानां रूपत्वम्।

(३) असम्भिन्नः तदानीं तत्तद्बुद्धिवृत्तेरनुदयात् तत्प्रतिविम्बरूपया तच्छायापत्त्या रहित इत्यर्थः।

(४) सम्भेदः प्रतिविम्बनरूपा तच्छायापत्तिः सर्व्वसात्त्विकवृत्तेस्तदानीमनुदयात् मनागित्युक्तम् तथा च सात्त्विक्याः प्रकृतिविवेकसाक्षात्कारात्मिकाया बुद्धेस्तदा सद्भावात्तस्याःप्रतिबिम्बनं चितिशक्ताविति भावः।

(५) तस्मात्तत्संयोगादित्याद्युक्तकारिकायाम्, इति शेषः।

चैतन्यं भोग्यत्वयोग्यता च प्रकृतेर्जडत्वं विषयत्वञ्च नचैतयो-रस्ति निवृत्तिः न च करणीयाभावान्निवृत्तिः(१) तज्जा-तीयस्यान्यस्य करणीयत्वात् पुनःपुनःशब्दाद्युपभोगवदि-त्यत आह ।

**दृष्टा मयेत्युपेक्षक एको दृष्टाहमित्युपरमत्यन्या।**
**सति संयोगेऽपि तयोः प्रयोजनं नास्ति सर्गस्य॥६६॥**

करोतु नाम पौनःपुन्येन शब्दाद्युपभोगं प्रकृतिर्यया विवेकख्यातिर्न कृतेति कृतविवेकख्यातिस्तु शब्दाद्युपभोगं न जनयति। अविवेकख्यातिनिबन्धनोहि तदुपभोगः, निबन्धना भावेन न तद्भवितुमर्हति अङ्कुरइव बीजाभावे। प्राकृतान् हि सुखदुःखमोहात्मनः शब्दादींस्तदविवेकान्ममैते इत्यभि-मन्यमान आत्मा भुञ्जीत एवं विवेकख्यातिमपि प्राकृतीमवि-वेकादेवात्मा मदर्थयमिति मन्यते उत्पन्नविवेकख्यातिस्तु तद-संसर्गान्न शब्दादीन् भोक्तुमर्हति नापि विवेकख्यातिं प्राकृतीं ततोविविक्त आत्मा स्वार्थमभिमन्तुमर्हतीति। पुरुषार्थौ च भोगविवेकौ प्रकृत्यारम्भप्रयोजकावित्यपुरुषार्थौ सन्तौ न प्रकृतिं प्रयोजयतः तदिदमुक्तं प्रयोजनं नास्ति सर्गस्येति। अत्र प्रयुज्यते सर्गे प्रकृतिरनेनेति प्रयोजनं तदपुरुषार्थत्वे नास्तीत्यर्थः ॥ ६६ ॥

---

(१) एतयोर्भोक्तृत्वभोग्यत्वयोग्यतयोः ।

स्यादेतदुत्पन्नतत्त्वसाक्षात्कारान्मुक्तश्चेदनन्तरमेव मुक्तस्य तस्य शरीरपातः स्यादिति कथमदेहः प्रकृतिं पश्येत् अथ तत्त्वज्ञानेऽपि न मुच्यते कर्म्मणामप्रक्षीणत्वात् । तेषां कुतः प्रक्षयः भोगादिति चेत् हन्त भोस्तत्त्वज्ञानं न मोक्षसाधनमिति व्यक्ताव्यक्तज्ञविज्ञानजन्मना तत्त्वज्ञानेनापवर्ग इति रिक्तं वचः । भोगेन चापरिसंख्येयः कर्म्माशयप्रचययोऽनियतविपाकसमयः क्षेतव्यः ततश्चापवर्गप्राप्तिरित्यपि मनोरथमात्रमित्यत आह ।

**सम्यग्ज्ञानाधिगमाद्धर्म्मादीनामकारणप्राप्तौ ।**
**तिष्ठति संस्कारवशाच्चक्रभ्रमिवद्धृतशरीरः ॥६७॥**

तत्त्वसाक्षात्कारोदयादेवानादिरप्यनियतविपाककालोऽपि कर्म्माशयप्रचयो दग्धवीजभावतया न जात्याद्युपपभोगलक्षणाय फलाय कल्पते । क्लेशसलिलावसिक्तायां हि बुद्धिभूमौ कर्म्मवीजान्यङ्कुरं प्रसुवते तत्त्वज्ञाननिदाघनिपीतसकलक्लेशसलिलायामूषरायां कुतः कर्म्मवीजानामङ्कुरप्रसवः । तदिदमुक्तं धर्म्मादीनामकारणप्राप्ताविति अकारणत्वप्राप्तावित्यर्थः । उत्पन्नतत्त्वज्ञानेऽपि च संस्कारवशात्तिष्ठति यथोपरतेऽपि कुलालव्यापारे चक्रं वेगाख्यसंस्कारवशाद्भ्रमत्तिष्ठति कालपरिपाकवशात्तूपरते संस्कारे निष्क्रियं भवति । शरीरस्थितौ च प्रारब्धपरिपाकौ धर्म्माधर्म्मौ संस्कारौ । तथाचानुश्रूयते “भोगेन

क्षितरे क्षपयित्वाथ(१) सम्पद्यत,, इति "तावदेवास्य(२) चिरं यावन्न विमोक्ष्येऽथ सम्पत्स्ये,, इति । प्रक्षीयमाणाविद्याविशेषस्य संस्कारस्तद्वशात्तत्सामर्थ्याद्धृतशरीरस्तिष्ठति ॥ ६७ ॥

स्यादेतत् यदि संस्कारविशेषाद्धृतशरीरस्तथापि कदास्य मोक्षोभविष्यतीत्यत आह ।

**प्राप्ते शरीरभेदे चरितार्थत्वात्प्रधानविनिवृत्तेः ।**
**ऐकान्तिकमात्यन्तिकमुभयं कैवल्यमाप्नोति ॥६८॥**

अनारब्धविपाकानां तावत्कर्म्माशयानां तत्त्वज्ञानाग्निना वीजभावोदग्धः(३) प्रारब्धविपाकानां तूपभोगेन क्षये सति प्राप्ते शरीरभेदे विनाशे चरितार्थत्वात्कृतप्रयोजनत्वात्प्रधानस्य तं

---

(१) इतरे उत्पन्नविवेकज्ञानाः भोगेन प्रारब्धकर्म्माणीति शेषः क्षपयित्वा नाशयित्वा समाप्येति यावत् अथ प्रारब्धकर्म्मक्षयानन्तरं सम्पद्यते बन्धशून्यतया कैवल्यभाजनतारूपेण सम्पद्यते ।

(२) अस्य उत्पन्नविवेकज्ञानस्य तावदेव चिरं कैवल्यप्राप्तौ विलम्बः यावत् विमोक्ष्ये प्रारब्धकर्म्मभिरिति शेषः विमोच्यते ततोमुक्तिं प्राप्स्यतीत्यर्थः अथ प्रारब्धकर्म्ममोचनानन्तरं सम्पत्स्ये कैवल्यरूपेण सम्पन्नो भविष्यतीत्यर्थः ।

(३) "ज्ञानाग्निः सर्वकर्म्माणि भस्मसात् कुरुतेऽर्ज्जुन"इति "मा भुक्तं क्षीयते कर्म्म कल्पकोटिशतैरपीति" शास्त्रयोः प्रारब्धाप्रारब्धकर्म्मविषयकत्वेन क्षयाक्षयौ व्यवस्थापितावित्याशयेनाह तत्त्वज्ञानाग्निनेत्यादि ।

पुरुषं प्रति निवृत्तावैकान्तिकमवश्यम्भावि आत्यन्तिकमविनाशीत्युभयं कैवल्यं दुःखत्रयविगमं प्राप्नोति पुरुषः॥ ६८॥

प्रमाणेनोपपादितेऽप्यत्यन्तश्रद्धोत्पादनाय परमर्षिपूर्व्वकत्वमाह।

**पुरुषार्थज्ञानमिदं गुह्यम्परमर्षिणा समाख्यातम्।**
**स्थित्युत्पत्तिप्रलयाश्चिन्त्यन्ते यत्र भूतानाम्॥६९॥**

गुह्यं गुहानिवासि स्थूलधियां दुर्बोधमिति यावत् परमर्षिणा कपिलेन। तामेव श्रद्धामागमिकत्वेन द्रढयति स्थित्युत्पत्तिप्रलयाश्चिन्त्यन्ते यत्र भूतानां यत्र ज्ञाने यदर्थं यथा चर्म्मणि द्वीपिनं हन्तीति। भूतानां प्राणिनां स्थित्युत्पत्तिप्रलया आगमैश्चिन्त्यन्ते॥ ५९॥

स्यादेतत् यत्परमर्षिणा साक्षात्कथितं(२६) तच्छ्रद्दधीमहि यत्पुनरीश्वरकृष्णेन कथितं तत्र कुतः श्रद्धेत्यत आह।

**एतत्पवित्रमग्र्यं मुनिरासुरयेऽनुकम्पया प्रददौ।**
**आसुरिरपि पञ्चशिखाय तेन बहुधा कृतन्तन्त्रम्॥७०**

एतत्(१) पवित्रं पावनं दुःखत्रयहेतोः पाप्मनः पुनातीति अग्र्यं सर्वेभ्यः पवित्रेभ्यो मुख्यं मुनिः कपिलः आसुरयेऽनुकम्पया

(१) "अथ त्रिविधदुःखात्यन्तनिवृत्तिरत्यन्तपुरुषार्थः" इत्यादिकं सूत्रजातात्मकषड़ध्यायीरूपं शास्त्रम्।

प्रददौ आसुरिरपि पञ्चशिखाय तेन च बहुधा कृतं तन्त्रम्॥ ७०॥

**शिष्यपरम्परयागतमीश्वरकृष्णेन चैतदार्य्याभिः।**
**संक्षिप्तमार्य्यमतिना सम्यग्विज्ञाय सिद्धान्तम्॥७१॥**

आरात् याता तत्त्वेभ्य इत्यार्य्या आर्य्या मतिर्य्यस्य सोऽयमार्य्यमतिरिति॥ ७१॥

एतच्च शास्त्रं, सकलशास्त्रार्थसूचकत्वात् न तु प्रकरणमित्याह।

**सप्तत्यां किल येऽर्थास्तेऽर्थाः कृत्स्नस्य षष्टितन्त्रस्य।**
**आख्यायिकाविरहिताः परवादविवर्ज्जितास्चापि॥७२**

तथा च राजवार्त्तिकं "प्रधानास्तित्वमेकत्व(1) मर्थवत्त्वमथान्यता॥ पारार्थ्यञ्च तथानैक्यं वियोगोयोग एव च। शेषवृत्तिरकर्तृत्वं मौलिकार्थाः स्मृता दश। विपर्य्ययः पञ्चविधस्तथोक्ता नव तुष्टयः। करणानामसामर्थ्यमष्टाविंशतिधा मतम्। इति

(1) एकत्वं सर्गभेदेऽप्यभिन्नत्वम् अतएव तस्याः सत्त्वादिगुणभेदेन भिन्नतया बहुत्वेऽपि न क्षतिः अतएव च विष्णुपुराणे "प्रकृतेरसंख्येयतामभिधाय यथा—

'महान्तं च समावृत्य प्रधानं समवस्थितम्।
अनन्तस्य न तस्यान्तः संख्यानं वापि चेष्यते' इति।

षष्टिः पदार्थानामष्टाभिः सह सिद्धिभिरिति,। सेयं षष्टिपदार्थी कथितेति सकलशास्त्रार्थकथनान्नेदं प्रकरणमपि तु शास्त्रमेवेदमिति सिद्धम्। एकत्वमर्थवत्त्वं पारार्थ्यञ्च प्रधानमधिकृत्योक्तम्। अन्यत्वमकर्तृत्वं बहुत्वञ्चेति पुरुषमधिकृत्य। अस्तित्वं वियोगोयोगश्चेत्युभयमधिकृत्य। स्थितिरिति (१) स्थूलसूक्ष्ममधिकृत्य॥ ७२॥

मनांसि कुमुदानीव बोधयन्ती सतां मुदा।
श्रीवाचस्पतिमिश्राणां कृतिः स्तात्तत्त्वकौमुदी॥

इति षड्दर्शनटीकाकृद्वाचस्पतिमिश्रविरचिता साङ्ख्यतत्त्वकौमुदी समाप्ता।

---

(१) शेषवृत्तिशब्दं व्याख्याय विषयं दर्शयति स्थितिरिति।

वाचस्पतेर्वचोभङ्गीं वेत्ति वाचस्पतिः परम्।
सिन्धूनामाशयज्ञाने सिन्धुरेव भवत्यलम्।
गुरुवाक्यानुसारेण व्याख्यातैषा प्रयत्नतः
एतत्प्रचारविषये गुरुर्मेऽस्तु सदा गतिः॥
वात्स्यवंशावतंसस्य कालिदासविदः, सुतः।
तारानाथाह्वयोविप्रः व्याख्यामेतां स्फुटां व्यधात्॥
शाके वह्निनवाद्रिचन्द्रविमिते वर्षे गते,भास्करे,
राशौ द्वन्द्वसमाह्वये गतवति प्रेक्षावतां प्रीतये।
तारानाथधरामरेण कृतया वृत्त्या समुद्भासिता
यत्नेनाङ्कनयोजिता बहुदिनैः संस्कृत्य यत्नादियम्॥

इति श्रीतारानाथतर्कवाचस्पतिभट्टाचार्यविरचिता सांख्यतत्त्वकौमुदीवृत्तिः समाप्ता।

# शुद्धिपत्रम् ।

| पृष्ठे | पङ्क्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| १ | १५ | सत्त्वमो | सत्वतमो |
| २ | ६ | द्विषय | द्विषय |
| ३ | ८ | द्दष्टे | दृष्टे |
| ४ | २० | दुःनिवृत्ते | दुःखनिवृत्ते |
| ५ | ९ | तदप्रत्यये | तदपत्यये |
| ७ | ९ | क्रतोश्चोपरि | क्रतोश्चोप |
| ७ | १३ | सोममममत्ता | सोममत्ता |
| ८ | २ | मनीषणः | मनीषिणः |
| ८ | ६ | ऽसकृत्पुन | ऽसकृद्पुन |
| १० | १७ | स्याहङ्कारस्य | स्याहङ्कारस्य |
| १२ | १ | द्दष्ट | दृष्ट |
| १३ | १७ | विषिखन्ति | विषिन्वन्ति |
| १६ | २३ | अयंजन | (त्याज्यम्) |
| २२ | १६ | प्रयोजकरूपै | प्रयोजकत्व-रूपै |
| २४ | १२ | ज्ञानं सम्भव | ज्ञानसम्भवं |
| २६ | ८ | तद्वेतुकं | तद्धेतुकं |
| २८ | १ | वृत्तान्तरे | वृत्त्यन्तरे |
| २९ | १७ | साधाणा | साधारणा |
| ३२ | १८ | रिभ्याशयेन | रित्याशयेन |
| ३४ | ९ | क्रसेण | क्रमेण |
| ३४ | २२ | प्रत्यक्षत्यनुमाम् | प्रत्यक्षत्यनुमानम् |
| ३५ | ७ | विपाणा | विषाणा |
| ४० | २२ | असत्वेम | असत्त्वेन |
| ४८ | ४ | (व) | (१) |
| ५३ | ७ | उपद्यते | उत्पद्यते |
| ५३ | १६ | त्वाभावास- | त्वासम्भव-म्भव |
| ५७ | २२ | मापाकृतम् | मपाकृतम् |
| ६० | १३ | मतर्थीय | मत्वर्थीय. |
| ६२ | १९ | परिणामण- | परिणामवत्त्व-वत्त्व |
| ६३ | २२ | घ्यनित्यमिति | घ्यनित्यत्व-मिति |
| ६५ | १३ | दृणवता | आदृणवता |
| ७१ | ८ | पारापर्य्येण | पारम्पर्य्येण |
| ७७ | ८ | पाधिभेनापि | पाधिभेदे-नापि |
| ७७ | २२ | बग्रवहारः | व्यवहारः |
| ७८ | २० | युगका | युगप |
| ८२ | ४ | संयोगग | संयोग |
| ८९ | १५ | एकस्मा | एकस्मा |
| ९० | १० | तत्त्व | तत्त्व |
| ९१ | १७ | पाणिना | पाणिनिना |
| ९६ | २० | ध्यववसाया | ध्यवसाया |
| १०० | १८ | बुग्ध्यहङ्कार | बुद्ध्यहङ्कार |
| १०२ | १२ | अस्मदादीन्तु | अस्मदादी-न,न्तु |

| पृष्ठे | पङ्क्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| १०३ | १ | तस्याहङ्कारि-कत्वेन: | तस्याहङ्का-रिकत्वेन |
| १०३ | १४ | वागेन्द्रिय | वागिन्द्रिय |
| १०८ | १० | सम्बव: | सम्भवः |
| १०८ | १७ | कारिकाखं | कारिकास्यं |
| १०८ | १८ | योग्यत्वं | योग्यत्वं |
| १०९ | १७ | विशेषाधारौ | विशेषाधारो |
| ११० | २० | वाक्यभप्यु | वाक्यमप्यु |
| ११० | २० | मत: | मन: । |
| १११ | २ | शीरास्तित्व | शरीरास्तित्व |
| १११ | १४ | मङ्गु | मङ्गुत |
| ११३ | ११ | बिकारानेय | विकारानेव |
| ११३ | १८ | कर्माङ्ग | कर्म्माङ्ग |
| ११४ | ७ | इच्छाया: | इच्छायाः |
| ११५ | १८ | रित | रिति |
| ११६ | ४ | एकैकम्यूस | एकैकस्यन्यून |
| ११९ | १४ | अष्टादश | नाष्टादश |
| १२० | १२ | फलत्ता | फलतत् |
| १२२ | १८ | वाच्य | वाच्य |
| १२४ | ७ | साक्षत् | साक्षात् |
| १२५ | १४ | कारतायाः | कारणतायाः |
| १२७ | ८ | भाववतो | भावयतो |
| १२८ | १३ | वेदाध्यनेच्छा | वेदाध्ययनेच्छा |
| १२८ | १६ | व्याख्यामनु | व्याख्यानमनु |
| १२९ | १५ | ध्यायन | ध्ययन |
| १२९ | १८ | पोदनात् | पादनात् |
| १३० | १६ | परियष्वजाते | परिषष्वजाते |

| पृष्ठे | पङ्क्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| १३१ | २ | पतञ्जलि | पतञ्जलि: |
| १३२ | १५ | म्यनुचित्व | म्यनुचितत्व |
| १३३ | १ | करणाना | कारणाना |
| १३३ | २ | तुष्यो | तुष्यो |
| १३३ | १७ | लिङ्गा | लिङ्ग |
| १३५ | ४ | सर्गस्य | सर्गस्य |
| १३५ | ७ | स्तम्व | स्तम्ब |
| १३६ | १८ | एतद्दुखस्य | एतद्दु:खस्य |
| १३८ | २ | द्यव्यत्र | खस्याद्य |
| १३८ | १४ | सम्भगात् | सम्भवात् |
| १४० | १८ | सम्बन्धन | सम्बन्धेन |
| १४० | १९ | तव | तत्र |
| १४४ | १८ | अनियतवा | अनियततया |
| १४५ | २१ | भावात्मकस्या | भावात्मकस्य |
| १४५ | २२ | दित्यर्त्त | दित्यर्थः |
| १४९ | ६ | प्रचच्चयो | प्रचयो |
| १५२ | १८ | वह्नि | वह्नि |

## विज्ञापन शुद्धिपत्रम् ।

| पृष्ठे | पङ्क्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| २ | १० | अष्टाधिशति: | अष्टाविंशति: |
| ५ | ४ | निर्णत | निर्णीत |
| ५ | ८ | तस्य.प्रांची-नता | तस्यार्वाची-नता |
| ५ | १४ | गम्बीर | गम्भीर |